भवान्, भीष्मः पितामहः, कर्णः च, समितिंजयः कृपः च, अश्वत्थामा, विकर्णः च, तथा च सोमदत्तिः, अन्ये च बहवः शूराः, एते सर्वे मदर्थे स्वकीयं जीवितं त्यक्तुं सिद्धाः सन्ति। एते सर्वे नानाशस्त्रप्रहरणाः तथा सर्वेऽपि युद्धविशारदाः सन्ति।

अस्माकं धृतराष्ट्रपुत्राणां एतत् बलं अपर्याप्तं अस्ति। तथा एतेषां पाण्डुनन्दनानां भीमाभिरक्षितं सैन्यं पर्याप्तं अस्ति। अतः सर्वे एव भवन्तः वीराः सर्वेषु अयनेषु यथास्थानं अवस्थिताः भीष्मं पितामहं एव सर्वतः रक्षन्तु।

राज्ञः दुर्योधनस्य एतत् भाषणं श्रुत्वा, तस्य हर्षं संजनयन्, प्रतापवान् कुरुषु वृद्धः पितामहः भीष्मः उच्चैः सिंहनादं विनद्य, पश्चात् शङ्खं च दध्मौ। ततः सर्वेषां वीराणां शङ्खाः च भेर्यः च, पणवाः आनकाः गोमुखाः च, सहसा एव अभ्यहन्यन्त। सः तुमुलः शब्दः अभवत्। ततः श्वेतैः हयैः युक्ते महति रथे स्थितौ, माधवः श्रीकृष्णः पाण्डवः अर्जुनः च, स्वकीयौ दिव्यौ शंखौ प्रदध्मतुः।

कृष्णः पाञ्चजन्यं शंखं दध्मौ, अर्जुनः देवदत्तं नामकं शंखं दध्मौ, भीमकर्मा भीमः पौण्ड्रं नामकं महाशङ्खं दध्मौ। युधिष्ठिरः अनन्तविजयं, नकुलः सुघोषं, सहदेवः च मणिपुष्पकं शङ्खं दध्मौ। महाधनुर्धारी काशीराजः, महारथः

शिखण्डी च, धृष्टद्युम्नः, विराटः च, अपराजितः सात्यकिः च, द्रुपदः द्रौपदेयाः च, महाबाहुः सौभद्रः, पृथक् पृथक् सर्वशः स्वकीयान् शंखान् दध्मुः । हे पृथिवीपते ! सः तुमुलः घोषः नभः पृथिवीं च विशेषेण अनुनादयन् सर्वेषां धृतराष्ट्रस्य पुत्राणां हृदयानि व्यदारयत् ।

अथ कपिध्वजः पण्डुनंदनः अर्जुनः, धृतराष्ट्रपुत्रान् स्वकीये सेनाव्यूहे व्यवस्थितान् दृष्ट्वा, इदानीं शस्त्राणां आघातः प्रवृत्त एव इति मत्वा, स्वकीयं धनुः उद्यम्य, हे राजन् ! श्रीकृष्णं इदं वाक्यं आह । हे अच्युत ! उभयोः सेनयोः मध्ये मे रथं स्थापय । अहं एतान् योद्धुकामान् व्यवस्थितान् सेनास्थितान् वीरान् निरीक्षे । अस्मिन् रणे मया कैः सह योद्धव्यं इति च द्रष्टुं इच्छामि । दुष्टबुद्धेः दुर्योधनस्य अस्मिन् युद्धे प्रियं चिकीर्षवः एते समागताः वीराः सन्ति । योत्स्य--मानान् सर्वान् वीरान् अहं अवेक्षे ।

संजय उवाच–हे भारत धृतराष्ट्र ! एवं अर्जुनेन उक्तः कृष्णः उभयोः सेनयोः मध्ये, भीष्मद्रोणसमीपे एव, अन्येषां सर्वेषां च महीपालानां सन्मुखं, अर्जुनस्य उत्तमं रथं स्थापयित्वा, ' हे पार्थ ! एतान् समवेतान् कुरून् पश्य ', इति उवाच ।

---:o:---

## पाठ २४

अथ पार्थः अर्जुनः उभयोः सेनयोः मध्ये स्थितान् स्वकीयान् पितॄन्, पितामहान्, आचार्यान्, मातुलान्, भ्रातॄन्, पुत्रान्, पौत्रान्, सखीन्, श्वशुरान्, सुहृदः, च एव अपश्यत्। स अर्जुनः तान् सर्वान् बन्धून् अवस्थितान् समीक्ष्य, परया कृपया आविष्टः, विषीदन् इदं अब्रवीत्। हे कृष्ण! इमं स्वजनं युयुत्सुं समुपस्थितं दृष्ट्वा, मम गात्राणि सीदन्ति, मम मुखं च परिशुष्यति, मे शरीरे कम्पः रोमहर्षः च जायते, मम हस्तात् गाण्डीवं धनुः स्रंसते, मम त्वक् च सर्वतः परिदह्यते। अहं इदानीं अत्र अवस्थातुं अपि न शक्नोमि। मे मनः इदानीं भ्रमति इव इति भाति। हे केशव! सर्वतः निमित्तानि लक्षणानि विपरीतानि एव पश्यामि। अस्मिन् युद्धे एनं स्वजनं हत्वा, किंचिदपि श्रेयः न अनुपश्यामि। हे कृष्ण! अहं अस्मिन् युद्धे विजयं न कांक्षे, राज्यं सुखानि च अपि न इच्छामि। हे गोविन्द! राज्येन नः किं सुखं भवेत्? भोगैः जीवितेन अपि च कीदृक् सुखं भवेत्? येषां एवेषां अर्थे नः राज्यं कांक्षितं, भोगाः च अपि कांक्षिताः, सुखानि च इष्टानि, ते इमे आचार्याः पितरः पुत्राः, तथा च पितामहाः मातुलाः श्वशुराः, पौत्राः, श्यालाः, तथा

संबन्धिनः, प्राणान् धनानि सुखानि च त्यक्त्वा, अस्मिन् युद्धे अवस्थिताः।

हे मधुसूदन श्रीकृष्ण ! मां घ्नतः अपि एतान् धृतराष्ट्रस्य पुत्रान्, अहं हन्तुं न इच्छामि। त्रैलोक्यस्य राज्यस्य-हेतोः अपि एतान् हन्तुं अहं न इच्छामि। किं तु पृथिवी-स्थितस्य राज्यस्य हेतो ? हे जनार्दन ! एतान् धृतराष्ट्रस्य पुत्रान् निहत्य, नः कः आनन्दः स्यात्? एतान् आततायिनः हत्वा, अस्मान् पापं एव आश्रयेत्। तस्मात् एतान् स्वबान्धवान् धृतराष्ट्रस्य पुत्रान् वयं हन्तुं न योग्याः। हे माधव ! हि स्वजनं हत्वा वयं कथं सुखिनः स्याम ?

यद्यपि लोभेन हतचेतसः एते धृतराष्ट्रस्य पुत्राः कुलस्य क्षयं न पश्यन्ति, मित्रद्रोहे पातकं च अपि न पश्यन्ति, तथापि हे जनार्दन ! कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिः अस्मात् पापात् निवर्तितुं कथं न ज्ञेयम् ?

कुलस्य क्षये संजाते सनातनाः कुलधर्माः प्रणश्यन्ति, उत नष्टे धर्मे अधर्मः कृत्स्नं कुलं अभिभवति। हे कृष्ण ! अधर्मस्य प्रभावात् कुलस्त्रियः प्रदुष्यन्ति, स्त्रीषु दुष्टासु वर्ण-संकरः जायते। संकरः कुलघ्नानां कुलस्य नरकाय एव भवति।

एषां पितरः लुप्त-पिण्डोदक-क्रियाः सन्तः पतन्ति। कुल-

घातकानां एतैः वर्णसंकरकारकैः दोषैः शाश्वताः जातिधर्माः 'कुलधर्माः च उत्साद्यन्ते । हे जनार्दन ! उत्सन्नकुलधर्माणां मनुष्याणां नरके नियतं वासः भवति, इति वयं अनुशुश्रुम । अहो ! यत्, महत् पापं कर्तुं वयं व्यवसिताः, यत् राज्यस्य लोभेन स्वजनं अत्र हन्तुं वयं उद्यताः ।

यदि शस्त्रपाणयः एते धृतराष्ट्रस्य पुत्राः, अशस्त्रं अप्रतीकारं मां रणे हन्युः, तत् मे क्षेमतरं भवेत् ।

संजय उवाच-- रणभूम्यां एवं उक्त्वा, शोकेन उद्विग्नमनाः भूत्वा अर्जुनः सशरं चापं त्यक्त्वा, रथस्य उपस्थे उपाविशत् ।

अथ द्वितीयोऽध्यायः ।

संजय उवाच-- तथा कृपया आविष्टं अश्रुपूर्णाकुलेक्षणं विषीदन्तं तं अर्जुनं मधुसूदनः इदं वाक्यं उवाच ।

श्रीभगवान् उवाच-- हे अर्जुन ! अनार्यजुष्टं अस्वर्ग्यं अकीर्तिकरं इदं कश्मलं विषमे अस्मिन् समये, त्वां कुतः समुपस्थितम् ? हे पार्थ ! क्लैब्यं मा गमः स्म । त्वयि वीरे न एतत् उपपद्यते । हे परंतप अर्जुन ! इदं क्षुद्रं हृदयदौर्बल्यं त्यक्त्वा, युद्धाय उत्तिष्ठ ।

—:०-०:—

## पाठ २५

अर्जुन उवाच–हे मधुसूदन ! अहं भीष्मं द्रोणं च युद्धे इषुभिः कथं प्रतियोत्स्यामि ? हे अरिसूदन ! एतौ भीष्मद्रोणौ पूजार्हौ । हि महानुभावान् गुरून् न हत्वा, इह लोके भैक्ष्यं अपि भोक्तुं श्रेयः । गुरून् हत्वा तु, इह एव रुधिरेण प्रदिग्धान् अर्थकामान् भोगान् भुञ्जीय ।

आवयोः कतरत् गरीयः ? यत् वा वयं तान् जयेम, अथवा ते अस्मान् जयेयुः, एतत् अपि वयं न विद्मः । यान् हत्वा न जिजीविषामः, ते एव अस्मिन् युद्धे अस्मत्संमुखं युद्धार्थं अवस्थिताः । दीनतायाः दोषेण अपहृतस्वभावः, धर्मनिश्चये च संमूढचेताः अहं त्वां पृच्छामि । यत् निश्चयेन श्रेयः स्यात्, तत् मे ब्रूहि । अहं ते शिष्यः । त्वां प्रपन्नं मां शाधि । अस्यां पृथिव्यां असपत्नं समृद्धं राज्यं, सुराणां च अपि आधिपत्यं अवाप्य, यत् मम इन्द्रियाणां उच्छोषकं शोकं अपनुद्यात्, तत् न पश्यामि ।

संजय उवाच— परंतपः गुडाकेशः अर्जुनः एवं हृषीकेशं कृष्णं उक्त्वा ' न योत्स्ये ' इति गोविन्दं उक्त्वा तूष्णीं बभूव । हे भरतश्रेष्ठ धृतराष्ट्र ! उभयोः सेनयोः मध्ये विषीदन्तं अर्जुनं हृषीकेशः प्रहसन् इव इदं वचनं अब्रवीत् ।

श्रीभगवान् उवाच— त्वं अशोचनीयान् अन्वशोचः। बहून प्रज्ञावादान् च भाषसे। पण्डिताः गतासून् अगतासून् च न अनुशोचन्ति।

अहं पूर्वकाले न आसं इति तु नैव, त्वं अपि पूर्वकाले न आसीः इति अपि न, इमे सर्वे राजानः, ये अत्र समागताः ते, पूर्वकाले नासन् इति अपि नैव। तथा च अतः परं भविष्यकाले, वयं सर्वे न भविष्यामः इत्यपि नैव सत्यं अस्ति। देहधारिणः अस्मिन् देहे यथा कौमारं यौवनं जरा भवति, तथैव तस्य देहान्तरप्राप्तिः च भवति एव। अतः तत्र धीरः न मुह्यति।

इन्द्रियैः सह ये विषयाणां स्पर्शाः भवन्ति, ते शीत-उष्ण-सुख-दुःखदाः भवन्ति, एते स्पर्शाः कदा भवन्ति, कदा न भवन्ति, अतः ते अनित्याः। हे अर्जुन! तान् स्पर्शान् तितिक्षस्व, सहस्व। हे पुरुषश्रेष्ठ! यं दुःखे सुखे च सम-भावेन वर्तमानं धीरं पुरुषं एते न व्यथयन्ति, स पुरुषः अमृतत्वप्राप्तये योग्यः भवति।

असतः सद्भावः न विद्यते, सतः च अभावः अपि न भवति। तत्त्वदर्शिभिः उभयोः एनयोः अन्तिमः निश्चयः कृतः। येन इदं सर्वं जगत् विस्तारितं तत् तत्त्वं अविनाशि

संग्रामं न करिष्यासि चेत्, ततः स्वधर्मं कीर्तिं च हित्वा पापं अवाप्स्यसि । अपि च भूतानि ते अव्ययां अकीर्तिं कथयिष्यन्ति। संभावितस्य च अकीर्तिः मरणात् अतिरिच्यते

महारथाः त्वां भयात् रणात् उपरतं मंस्यन्ते । येषां च त्वं बहुमतः भूत्वा, लाघवं यास्यसि। तव सामर्थ्यं निन्दन्तः तव अहिताः, बहून् अवाच्यान् वादान् वदिष्यन्ति ततः किंनु दुःखतरम् ? अस्मिन् युद्धे हतः स्वर्गं प्राप्स्यसि, जित्वा वा महीं भोक्ष्यसे, हे अर्जुन ! तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ । सुखदुःखे, लाभालाभौ, जयाजयौ समे कृत्वा, ततः युद्धाय युज्यस्व, एवं पापं न अवाप्स्यसि ।

हे पार्थ! एषा ते सांख्ये बुद्धिः अभिहिता। योगे तु इमां बुद्धिं शृणु । यया बुद्ध्या युक्तः त्वं सर्वं कर्मबन्धं प्रहास्यसि ।

इह अभिक्रमनाशः नास्ति। अत्र प्रत्यवायः न विद्यते । अस्य योगधर्मस्य स्वल्पं अपि अनुष्ठानं महतः भयात् त्रायते । हे अर्जुन! इह व्यवसायात्मिका एका एव बुद्धिः फलदायिनी भवति । । अव्यवसायिनां अनन्ताः बुद्धयः बहुशाखाः च भवन्ति ।



ભાગ ૮

ૐ

# સંસ્કૃત-સ્વયં-શિક્ષક

( સંસ્કૃત ભાષાનો અભ્યાસ કરવાનો સુહેલો ઉપાય. )

ભાગ આઠમો

— + —





લેખક

પં. શ્રીપાદ દામોદર સાતવળેકર


—•◦•—


સંવત્ ૨૦૦૯, શક ૧૮૭૪, ઇ. સ. ૧૯૫૨

— + —

સ્વાધ્યાય-મંડળ, પારડી ( જિ. સૂરત )

# દ્વિતીય, ચતુર્થ અને ષષ્ઠ ગણના ક્રિયાપદ.

આગળ થઇ ગયેલા ૭ મા ભાગમાં પ્રથમગણ અને દશમ-ગણના ક્રિયાપદ બનાવવાની વિધિ બતાવી છે એજ ગણ વિશેષ ઉપયોગી ધાતુઓથી પરિપૂર્ણ છે, અને એમાં જ બધાથી વધારે ધાતુઓની સંખ્યા છે. એટલે એ બે ગણ સારી રીતે થઇ જાય તો અર્ધાથી પણ વધારે ધાતુ તૈયાર થઇ જાય છે પછી બાકીના થોડાજ ધાતુઓ બીજા આઠ ગણોમાથી તૈયાર કરવાના રહે છે. એમાંથી દ્વિતીય, ચતુર્થ અને ષષ્ઠ આ ત્રણ ગણના ધાતુઓના ક્રિયાપદ બનાવવાની વિધિ આ પુસ્તકમાં બતાવવાની છે. આશા છે કે પાઠક એનો સારો અભ્યાસ કરશે.

સુગમતાને માટે આ પુસ્તકમાં પ્રથમ ષષ્ઠ ગણ પછી ચતુર્થ ગણ અને અંતમા દ્વિતીય ગણના ધાતુઓ આપ્યા છે.

સ્વાધ્યાય-મંડળ
' આનંદાશ્રમ '
પારડી (જિ. સુરત)

લેખક
શ્રીપાદ દામોદર સાતવળેકર

મુદ્રક અને પ્રકાશક— વસંત શ્રીપાદ સાતવળેકર
સ્વાધ્યાય-મંડળ, ભારત મુદ્રણાલય,
' આનંદાશ્રમ ' પારડી (જિ. સુરત)

# સંસ્કૃત-સ્વયં-શિક્ષક

ભાગ આઠમો

## પાઠ ૧

### षष्ठ ગણુના ધાતુ

આથી પહેલાં બતાવી દીધું છે કે પ્રથમ ગણુના ધાતુઓને પ્રત્યય લગાડતાં પહેલાં " अ " લગાડવાનો હોય છે અને દશમ-ગણુના ધાતુઓને " अय " લાગે છે. એજ પ્રમાણે આ षष्ठ ગણુના ધાતુઓને " अ " લાગે છે. પરંતુ પ્રથમ ગણુનો " अ " હ્રસ્વ સ્વરોનો ગુણ કરવાવાળો છે અને ઘણું કરીને આ षष्ठ ગણુનો " अ " ગુણ નથી કરતો જેમકે—

१ बुध् ( જાણવું ) प्रथम गण = बोधति, बोधतः, बोधन्ति ।

२ गुज् ( શબ્દ કરવો ) षष्ठ गण = गुजति, गुजतः, गुजन्ति ।

જો बुध् ધાતુ षष्ठ ગણુમાં હોત તો તેનું ' बुधति ' થાત અને જો गुज् ધાતુ પ્રથમ ગણુમાં હોત તો તેનું રૂપ ' गोजति ' થાત. આટલો આ ગણોમાં તફાવત છે. પાઠક આ ભેદને ધ્યાનમાં રાખે. પછી षष्ठ ગણુના બાકીના બીજાં રૂપો ઘણાં ખરાં પ્રથમ ગણુના સરખાંજ થાય છે, પરંતુ પૂર્વોક્ત ગુણ થવો અને ન થવો એ ભેદજ વિશેષ પ્રધાન સ્થાન રાખે છે. હવે જુઓ-એનાં રૂપ નીચે પ્રમાણે થાય છે.

चल्' ( ચાલવું )

१ लट् (વર્તમાન કાલ) १ चलति, चलतः, चलन्ति। २ चलसि, चलथः, चलथ। ३ चलामि, चलावः, चलामः।

२ लिट् ( अनद्यतन परोक्षभूत ) १ चचाल, चेलतुः, चेलुः। २ चेलिथ, चेलथुः, चेल। चचाल, चेलिव, चेलिम।

३ लुट् (अनद्यतन भविष्य) १ चलिता, चलितारौ, चलितारः। २ चलितासि, चलितास्थः, चलितास्थ। ३ चलितास्मि, चलितास्वः, चलितास्मः।

४ लृट् ( भविष्य ) १ चलिष्यति, चलिष्यतः, चलिष्यन्ति। २ चलिष्यसि, चलिष्यथः, चलिष्यथ। ३ चलिष्यामि, चलिष्यावः, चलिष्यामः।

५ लेट् ( એનો પ્રયોગ વેદમાં થાય છે. )

६ लोट् ( आज्ञार्थ ) १ चलतु, चलताम्, चलन्तु। २ चल, चलतम्, चलत। ३ चलानि, चलाव, चलाम।

७ लङ् (अनद्यतनभूत) १ अचलत्, अचलताम्, अचलन्। २ अचलः, अचलतम्, अचलत। ३ अचलम्, अचलाव, अचलाम।

८ लिङ् ( विधिलिङ् ) १ चलेत्, चलेताम्, चलेयुः। २ चलेः, चलेतम्, चलेत। ३ चलेयम्, चलेव, चलेम।

( आशीर्लिङ् ) १ चल्यात्, चल्यास्ताम्, चल्यासुः। २ चल्याः, चल्यास्तम्, चल्यास्त। ३ चल्यासम्, चल्यास्व, चल्यास्म।

९ लुङ् ( भूतकाल) १ अचालीत्, अचालिष्टाम्, अचालिषुः। २ अचालीः, अचालिष्टम्, अचालिष्ट। ३ अचालिषम्, अचालिष्व, अचालिष्म।

१० लृङ् ( हेतुहेतुमद्भावार्थ ) १ अचलिष्यत्, अचलिष्यताम्, अचलिष्यन् । २ अचलिष्यः, अचलिष्यतम्, अचलिष्यत । ३ अचलिष्यम्, अचलिष्याव, अचलिष्याम ।

પાઠક આ પ્રમાણે षष्ठ ગણના ધાતુઓના પરસ્મૈપદી રૂપ બનાવી શકશે.

### षष्ठ-ગણ પરસ્મૈપદના ધાતુ.

इष् ( ઇચ્છા કરવી ) इच्छति । इयेष । एषिता, एष्टा । एषिष्यति ।
उज्झ् ( છોડવું ) उज्झति । उज्झाञ्चकार । उज्झिता । उज्झिष्यति ।
ऋच् ( સ્તુતિ કરવી ) ऋचति । आनर्च । अर्चिता । अर्चिष्यति ।
ऋच्छ् ( જવું ) ऋच्छति । आनर्च्छ । ऋच्छिता । ऋच्छिष्यति ।
कुच् ( સંકોચ કરવો ) कुचति । चुकोच । कुचिता । कुचिष्यति ।
कुट् ( કુટિલ થવું ) कुटति । चुकोट । कुटिता । कुटिष्यति ।
कृन् ( કાપવું ) कृन्तति । चकर्त । कर्तिता । कर्तिष्यति, कर्त्स्यति ।
कृ ( ફેંકવું ) किरति । चकार । कारिता । कारिष्यति ।
क्षुर् ( વિલેખન કરવું ) क्षुरति । चुक्षोर । क्षोरिता । क्षोरिष्यति ।
गु ( શૌચ કરવું ) गुवति । जुगाव । गुता । गुष्यति ।
गुज् ( શબ્દ કરવો ) गुजति । जुगोज । गुजिता । गुजिष्यति ।
गुञ्ज् ( અસ્પષ્ટ શબ્દ કરવો ) गुञ्जति । जुगुञ्ज । गुञ्जिता । गुञ्जिष्यति ।
गुम्फ् ( ગૂંથવું ) गुम्फति । जुगुम्फ । गुम्फिता । गुम्फिष्यति ।
गॄ ( ગળવું ) गिरति । जगार । गरिता । गारिष्यति ।
गिलति । जगाल । गलिता । गालिष्यति ।
घुर् ( શબ્દ કરવો ) घुरति । जुघोर । घोरिता । घोरिष्यति ।
घूर्ण् ( ઘુમાવવું ) घूर्णति । जुघूर्ण । घूर्णिता । घूर्णिष्यति ।
चल् ( ચાલવું ) चलति । चचाल । चलिता चलिष्यति ।

## संस्कृत-वाक्यानि ।

१ त्वं किं इच्छसि ? तौ किं इच्छतः ? ते क्रीडितुं इच्छन्ति । स कदा क्रीडां कर्तुं एषिष्यति ? सर्वे बालकाः धावितुं एषिष्यन्ति किम् ?

२ पण्डिताः परमात्मानं ऋर्चन्ति । कः एवं देवं आनर्च ? यदि त्वं अर्चिष्यसि तर्हि अहमपि देवं तथा अर्चिष्यामि ।

३ यथा काष्ठकारः काष्ठं कृन्तति तथा वयं न कृन्तामः । नापितः केशान् कृन्तति ।

४ बालकः बालकेन सह गुजति । तदा एवं कः जुगोज ? यूयं कदा गुजिष्यथ ? सर्वे पुरुषाः तत्र गुजन्ति ।

५ बालिकाः पुष्पाणां मालाः गुम्फन्ति । मालाकारः उद्यानात् पुष्पाणि आनयति मालां च गुम्फति । त्वं कदा मालां गुम्फिष्यसि ?

६ यंत्रकारः चक्राणि घूर्णति । त्वं किं घूर्णसि ? यदा स घूर्णिष्यति तदा त्वं किं करिष्यसि ?

७ सर्वे मानवाः सायंकाले भ्रमणाय चलिष्यन्ति किम् ? बालकाः भ्रमणाय चलन्तु । त्वं अपि भ्रमणाय चल ।

પાઠક આ પ્રમાણે ધાતુઓના રૂપ બનાવી વાક્યો બનાવી શકશે, અને પોતાનો અભ્યાસ વધારી શકશે. આ પ્રમાણે વાક્ય બનાવવાથી જ સંસ્કૃતમાં વાતચીત કરવાનો અભ્યાસ વધી શકે છે.

–०–:—:–०–

# પાઠ ૨

હવે આ પાઠમાં ષષ્ઠગણ પરસ્મૈપદી ધાતુઓના કેટલાંક રૂપ પાઠકોની સુગમતાને માટે આપવામાં આવે છે.

जुड् = ( જોડવું )

१ लट् ( વર્તમાન કાલ ) = १ जुडति, जुडतः, जुडन्ति। २ जुडसि, जुडथः, जुडथ। ३ जुडामि, जुडावः, जुडामः।

तिल् = ( તેલ લગાવવું )

२ लिट् = ( अनद्यतन-परोक्षभूत ) १ तितेल, तितिलतुः, तितिलुः। २ तितेलिथ, तितिलथुः, तितिल। ३ तितेल, तितिलिव, तितिलिम।

तृप् = ( તૃપ્ત થવું )

३ लुट् = ( अनद्यतन-भविष्य ) = १ तर्पिता, तर्पितारौ, तर्पितारः। २ तर्पितासि, तर्पितास्थः, तर्पितास्थ। ३ तर्पितास्मि, तर्पितास्वः, तर्पितास्मः।

[ સૂચના— આ ધાતુના " तर्प्ता, त्रप्ता " એવાં પણ બીજાં રૂપ થાય છે. ]

त्रुट् = ( કાપવું )

४ लृट् = ( ભવિષ્ય ) = १ त्रुटिष्यति, त्रुटिष्यतः, त्रुटिष्यन्ति। २ त्रुटिष्यसि, त्रुटिष्यथः, त्रुटिष्यथ। ३ त्रुटिष्यामि, त्रुटिष्यावः, त्रुटिष्यामः।

५ लेट् = ( એનો પ્રયોગ ફક્ત વેદમાંજ થાય છે. )

धू = ( હલાવવું )

६ लोट् = ( आज्ञार्थ ) = १ धुवतु, धुवताम्, धुवन्तु। २ धुव,

श्रुवतम्, श्रुवत । ३ श्रुवानि, श्रुवाव, श्रुवाम ।

नू = ( સ્તુતિ કરવી )

७ लङ्= ( अनद्यतनभूत )= १ अनुवत्, अनुवताम, अनुवन् ।
२ अनुव, अनुवतम्, अनुवत । ३ अनुवम्, अनुवाव, अनुवाम ।

આ પ્રમાણે બીજા ધાતુઓના રૂપ બનાવો—

પષ્ઠ–ગણ પરસ્મૈપદના ધાતુ

चुट् ( છેદવું ) चुटति । चुचोट । चुटिता । चुटिष्यति ।
छुर् ( બેદન કરવું ) छुरति । चुच्छोर । छुरिता । छुरिष्यति ।
जुड् ( જોડવું, બાંધવું ) जुडति । जुजोड । जुडिता । जुडिष्यति ।
तिल् ( તેલ લગાવવું ) तिलति । तितेल । तेलिता । तेलिष्यति ।
तुट् ( કુદવું, સાફ કરવું ) तुटति । तुतोट । तुटिता । तुटिष्यति ।
तुड् ( તોડવું ) तुडति । तुतोड । तुडिता । तुडिष्यति ।
तृप् ( તૃપ્ત થવું ) तृपति । ततर्प । तर्पिता । तर्पिष्यति ।
त्रुट् ( કાપવું ) त्रुटति । तुत्रोट । त्रुटिता । त्रुटिष्यति ।
दृभ् ( સંબંધ જોડવો ) दृभति । ददर्भ । दर्भिता । दर्भिष्यति ।
संदृभ् ( „ „ ) संदृभति । संददर्भ । संदर्भिता । संदर्भिष्यति ।
धि ( ધારણ કરવું ) धियति । दिधाय । धेता । धेष्यति ।
धू ( હલાવવું ) धुवति । दुधाव । धुविता । धुविष्यति ।
ध्रू ( ગતિ કરવી, સ્થિર થવું ) ध्रुवति । दुध्राव । ध्रुता । ध्रुष्यति ।
नू ( સ્તુતિ કરવી ) नुवति । नुनाव । नुविता । नुविष्यति ।
पिश् ( દીપન કરવું ) पिशति । पिपेश । पेशिता । पेशिष्यति ।
पुण् ( શુભકર્મ કરવું ) पुणति । पुपोण । पोणिता । पोणिष्यति ।
पुर् ( આગળ જવું ) पुरति । पुपोर । पोरिता । पोरिष्यति ।

पृण् ( સંતુષ્ટ થવું ) पृणति । पपर्ण । पर्णिता । पर्णिष्यति ।
प्रच्छ् ( પૂછવું ) पृच्छति । पप्रच्छ । प्रष्टा । प्रक्ष्यति ।
बृह् ( ઉદ્યોગ કરવો ) बृहति । ववर्ह । वर्हिता । वर्हिष्यति ।
भुज् ( કુટિલ થવું ) भुजति । बुभोज । भोक्ता । भोक्ष्यति ।
मस्ज् ( સ્નાન કરવો ) मज्जति । ममज्ज । मंक्ता । मंक्ष्यति ।
मृ ( મરવું ) ममार । मर्ता । मरिष्यति ।

संस्कृत-वाक्यानि

१ यथा-नापितस्य क्षुरः छुरति तथा शूरस्य शस्त्राणि अपि छुरन्ति एव । तव छुरिकाः बालकं छुरिष्यन्ति ।

२ त्वं किमर्थं वृक्षं तुडसि ? कः उद्यानस्य वृक्षान् तुतोड ? यः वृक्षं तुतोड स कुत्र अस्ति ।

३ स देवान् मनुष्यान् पितॄन् च अन्नेन तर्पिष्यति । यः सदा अन्नादिना देवादीन् तृपति स एव श्रेष्ठो मनुष्यः ।

४ वायुः वनस्थान् वृक्षान् धुवति । त्वं किमर्थं तत् काष्ठं अधुवः ? स एव वस्त्रं धुवतु । त्वं तत् तथा मा धुव ।

५ त्वं अधुना कं नुवसि ? सर्वे मानवाः परमात्मानं नुवन्तु । कः अपि मानवं मा नुवतु ।

६ शृणु स त्वां किंपृच्छति । यूयं पृच्छथ । ते प्रक्ष्यन्ति । यूयं सर्वे अपि प्रश्नान् पृच्छथ ।

७ छात्राः नदीजले मज्जन्ति । ते सर्वे मनुष्याः तस्मिन्

अगाधे जले ममज्जुः । त्वं कदा मंक्ष्यसि ?

८ सर्वेऽपि प्राणिनः जलेन उदरं पृणन्ति । त्वं कदा तत्पात्रं अपृणः ? मेघः जलेन पृथिवीं पर्णिष्यति ।

९ अहं इदानीं तिलामि । स श्वः तेलिष्यति । त्वं कदा तेलिष्यामि ? यदा सर्वे तेलिष्यन्ति तदा अहमपि तेलिष्यामि ।

પાઠક આ પ્રમાણે વાકય બનાવે અને ધાતુઓના રૂપ બનાવવાનો અભ્યાસ વધારે. હવે થોડા ધાતુ આપવામાં આવે છે.

## षष्ठ ગણ પરસ્મૈપદી ધાતુ

मृश् ( વિચાર કરવો ) मृशति । ममर्श । म्रष्टा । म्रक्ष्यति ।
रुज् ( ભગ્ન થવું ) रुजति । रुरोज । रोक्ता । रोक्ष्यति ।
लिख् ( લખવું ) लिखति । लिलेख । लेखिता । लखिष्यति ।
विश् ( પ્રવેશ કરવો ) विशति । विवेश । वेष्टा । वेक्ष्यति ।
व्रश्च् ( છેદન કરવું ) व्रश्चति । वव्रश्च । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति ।
शुभ् ( શોભિત થવું ) शुभति । शुशोभ । शोभिता । शोभिष्यति ।
सुर् ( ઐશ્વર્ય યુક્ત થવું ) सुरति । सुषोर । सोरिता । सोरिष्यति ।
सू ( પ્રેરણા કરવી ) सुवति । सुषाव । सविता । सविष्यति ।
सृज् ( ઉત્પન્ન કરવું ) सृजति । ससर्ज । स्रष्टा । स्रक्ष्यति ।
स्पृश् ( સ્પર્શ કરવો ) स्पृशति । पस्पर्श । स्प्रष्टा । स्प्रक्ष्यति ।
स्फुट् ( વિકસિત થવું ) स्फुटति । पुस्फोट । स्फुटिता । स्फुटिष्यति ।
स्फुर् ( ફરકવું ) स्फुरति । पुस्फोर । स्फुरिता । स्फुरिष्यति ।
स्फुल् ( હાલવું ) स्फुलति । पुस्फोल । स्फुलिता । स्फुलिष्यति ।
हिल् ( ,, ભાવ કરવો ) हिलति । जिहेल । हेलिता । हेलिष्यति ।

હવે કેટલાક લકારોના રૂપ આપવામાં આવે છે.

विश् = ( પ્રવેશ કરવો )

८ लिङ् (विधिलिङ् )=१ विशेत्, विशेताम्, विशेयुः। २ विशेः, विशेतम्, विशेत। ३ विशेयम्, विशेव, विशेम॥

( आशीर्लिङ् )= १ विश्यात्, विश्यास्ताम्, विश्यासुः। २ विश्याः, विश्यास्तम्, विश्यास्त। ३ विश्यासम्, विश्यास्व, विश्यास्म॥

९ लुङ् ( भूतकाल )= १ अविक्षत्, अविक्षताम्, अविक्षन्। २ अविक्षः, अविक्षतम्, अविक्षत। ३ अविक्षम्, अविक्षाव, अविक्षाम॥

१० लृङ् ( हेतुहेतुमद्भावार्थ )= १ अवेक्ष्यत्, अवेक्ष्यताम्, अवेक्ष्यन्। २ अवेक्ष्यः, अवेक्ष्यतम्, अवेक्ष्यत। ३ अवेक्ष्यम्, अवेक्ष्याव, अवेक्ष्याम॥

## संस्कृत-वाक्यानि

१ त्वं किं इदानीं मृशसि? अहं किमपि न मृशामि। त्वं-एव सर्वं मृश। मनुष्याः मृशन्तु। त्वं किं न म्रक्ष्यसि?

२ बालकाः स्वगृहे विशन्तु। पक्षिणः तत्र न वेक्ष्यन्ति। त्वं कदा तस्मिन् गृहे वेक्ष्यसि?

३ अधिकारिणः पत्राणि लिखन्ति। रामः एकं पत्रं लिलेख। यदि त्वं निबन्धं लेखिष्यसि तर्हि अहं नैव लेखिष्यामि।

—:o:—

# પાઠ ૩

वाचन-पाठः ।

१ मलिनाः पुरुषाः तत्र जलं स्पृशन्तु । त्वं तान् रुग्णान् न स्पृश । अहमेव तं स्प्रक्ष्यामि ।

२ नटः तत्र कथं हिलति तत् पश्य । त्वं तथा न हिलसि । कदा त्वं तथा अहिलः यथा स हिलति ।

३ त्वं सर्वानपि वृक्षान् किमर्थं ग्रथति ? स कदा वनस्पतीन् ग्रग्रथ ? अहं कदापि नैव ग्रथिष्यामि ।

४ नरपतिः सभायां शुभति । त्वमपि तथा शुभसि यथा स शुभति । अलंकारैः त्वं शोभिष्यसि ।

પાઠક આ પ્રમાણે વાક્ય બનાવી પોતાનો અભ્યાસ વધારે

## ષષ્ઠ ગણ આત્મનેપદના ધાતુ

ષષ્ઠ ગણના પરસ્મૈપદી ધાતુઓના રૂપ બનાવવાની વિધિ પૂર્વ પાઠોમાં પાઠકોએ જોઇ છે હવે આત્મનેપદી ધાતુઓની વિધિ અહિ બતાવવામાં આવે છે—

' कु ' = ( શબ્દ કરવો )

१ लट् ( वर्तमानकाल )= १ कुवते, कुवेते, कुवन्ते । २ कुवसे, कुवेथे, कुवध्वे । ३ कुवे, कुवावहे, कुवामहे ॥

'जुष्' = ( સેવન કરવુ )

२ लिट् (अनद्यतन-भूतकाल)= १ जुजुषे, जुजुषाते, जुजुषिरे । २ जुजुषिसे, जुजुषाथे, जुजुषिध्वे । ३ जुजुषे, जुजुषिवहे, जुजुषिमहे ॥

'आ-दृ' = ( આદર કરવો )

३ लुट् (अनद्यतन-भविष्य) १ आदर्ता, आदर्तारौ, आदर्तारः । २ आदर्तासे, आदर्तासाथे आदर्ताध्वे । ३ आदर्ताहे, आदर्तास्वहे, आदर्तास्महे ।

'धृ' = ( રહેવુ )

४ लृट् ( भविष्यकाल )= १ धरिष्यते, धरिष्येते, धरिष्यन्ते । २ धरिष्यसे, धरिष्येथे, धरिष्यध्वे । ३ धरिष्ये, धरिष्यावहे, धरिष्यामहे ॥

'लस्ज्' = ( લજ્જા કરવી, શરમાવુ )

५ लोट् ( आज्ञार्थ )= १ लज्जताम्, लज्जेताम्, लज्जन्ताम् । २ लज्जस्व, लज्जेथाम्, लज्जध्वम् । ३ लज्जै, लज्जावहै, लज्जामहै ॥

પાઠક આ પ્રમાણે નીચે આપેલા ધાતુના રૂપ બનાવે.

षष्ठ ગણ આત્મનેપદના ધાતુ

कु ( શબ્દ કરવો ) कुवते । चुकुवे । कुविता । कुविष्यते ।
जुष् ( પ્રીતિ કરવી ) जुषते । जुजुषे । जोषिता । जोषिष्यते ।
आदृ ( આદર કરવો ) आद्रियते । आदद्रे । आदर्ता । आदरिष्यते ।
धृ ( રહેવુ ) ध्रियते । दध्रे । धर्ता । धरिष्यते ।
मृ ( પ્રાણ ત્યાગ કરવો ) म्रियते ।
लस्ज् ( લજ્જા કરવી, શરમાવુ ) लज्जते । ललज्जे । लज्जिता । लज्जिष्यते ।

( સૂચના—" મૃ " ધાતુના કેટલાક રૂપ પરસ્મૈપદના સરખાં અને કેટલાંક આત્મનેપદના સરખાં થાય છે. )

આ ધાતુઓના રૂપોનો ઉપયોગ કરીને સંસ્કૃત વાક્યો બનાવો-

संस्कृत-वाक्यानि ।

१ कः अत्र कुर्वते ? ते किमर्थं कुर्वन्ते । त्वं किं न तथा कुरुषे यथा स कुर्वते । वयं न कुर्वामहे ।

२ त्वं किं जोषिष्यसे ? आवां जुषावहे, वयमपि जुषामहे । ते जोषितारः ।

३ छात्राः गुरुं आदरिष्यन्ते । कौ छात्रौ गुरुं न आदरिष्येते ? त्वं राजानं किं न आदरिष्यसे ?

४ सर्वाः स्त्रियः लज्जन्ते । त्वं एवं किमर्थं लज्जसे ? कः अपि पुरुषः एवं न लज्जते ।

५ प्राणिनः म्रियन्ते । मानवाः अपि म्रियन्ते । कथं योगी शीघ्रं न म्रियते ?

આ પ્રમાણે ધાતુઓનો ઉપયોગ થઇ શકે છે.

षष्ठ ગણના ઉભયપદી ધાતુ

ઉભયપદી ધાતુઓના રૂપ બન્ને પ્રકારે અર્થાત્ પરસ્મૈપદી અને આત્મનેપદી ધાતુઓનાં રૂપોના સરખા થાય છે.

' कृष् ' = ( હળ ચલાવવું, ખેડવું )

१ लट् ( वर्तमान काल ) પરસ્મૈપદ= १ कृषति, कृषतः, कृषन्ति । २ कृषसि, कृषथः, कृषथ । ३ कृषामि, कृषावः, कृषामः ॥

આત્મનેપદ=१ कृपते, कृपेते, कृपन्ते। २ कृपसे, कृपेथे, कृपध्वे। ३ कृपे, कृपावहे, कृपामहे ॥

'क्षिप्' = (ફેંકવું)

२ लङ् (अनद्यतनभूत) પરસ્મૈપદ= १ अक्षिपत्, अक्षिपताम्, अक्षिपन्। २ अक्षिपः, अक्षिपतम्, अक्षिपत। ३ अक्षिपम्, अक्षिपाव, अक्षिपाम ॥

આત્મનેપદ= अक्षिपत, अक्षिपेताम्, अक्षिपन्त। २ अक्षिपथाः, अक्षिपेथाम्, अक्षिपध्वम्। ३ अक्षिपे, अक्षिपावहि, अक्षिपामहि ॥

'तुद्' = (દુઃખી થવું)

३ लोट् (आज्ञार्थ) પરસ્મૈપદ=१ तुदतु, तुदताम्, तुदन्तु। २ तुद, तुदतम्, तुदत। ३ तुदानि, तुदाव, तुदाम ॥

આત્મનેપદ= १ तुदताम्, तुदेताम्, तुदन्ताम्। २ तुदस्व, तुदेथाम्, तुदध्वम्। ३ तुदै, तुदावहै, तुदामहै ॥

'मुच्' = (છોડવું)

४ विधिलिङ् (विध्यर्थ) પરસ્મૈપદ= १ मुञ्चेत्, मुञ्चेताम्, मुञ्चेयुः। २ मुञ्चेः, मुञ्चेतम्, मुञ्चेत। ३ मुञ्चेयम्, मुञ्चेव, मुञ्चेम ॥

આત્મનેપદ= १ मुञ्चेत, मुञ्चेयाताम्, मुञ्चेरन्। २ मुञ्चेथाः, मुञ्चेयाथाम्, मुञ्चेध्वम्। ३ मुञ्चेय, मुञ्चेवहि, मुञ्चेमहि॥

હવે षष्ठगण उभयपदी धातु જુઓ:—

षष्ठ ગણના ઉભયપદી ધાતુ

कृष् (હળ ચલાવવું, ખેડવું) कृषति-ते। चकर्ष, चकृषे। क्रष्टा, कर्ष्टा। क्रक्ष्यति-ते। क्रक्ष्यति-ते।

क्षिप् ( ફેંકવું ) क्षिपति ते । चिक्षेप । क्षेप्ता । क्षेप्स्यति-ते ।

तुद् ( દુ:ખી થવું ) तुदति-ते । तुतोद, तुतुदे । तोत्ता । तोत्स्यति-ते ।

दिश् ( આજ્ઞા કરવી ) दिशति-ते । दिदेश, दिदिशे । देष्टा । देक्ष्यति ते ।

नुद् ( પ્રેરણા કરવી ) नुदति ते । नुनोद, नुनुदे । नोत्ता । नोत्स्यति ते ।

भ्रस्ज् ( શેકવું ) भृज्जति-ते । बभ्रज्ज, बभर्ज । भर्ष्टा । भ्रक्ष्यति ते ।

मिल् ( મેળ કરવો, મળવું ) मिलति ते । मिमेल, मिमिले । मेलिता । मेलिष्यति-ते ।

मुच् ( છોડવું ) मुञ्चति-ते । मुमोच, मुमुचे । मोक्ता । मोक्ष्यति ते ।

लिप् ( લિપવું ) लिम्पति ते । लिलेप-लिलिपे । लेप्ता । लेप्स्यति ते ।

विद् ( પ્રાપ્ત થવું ) विन्दति-ते । विवेद, विविदे । वेत्ता, वेदिता । वेत्स्यति-ते, वेदिष्यति ते ।

सिच् ( સિંચન કરવું, છાંટવું ) सिंचति-ते । सिषेच, सिषिचे । सेक्ता । सेक्ष्यति ते ।

આ ધાતુઓના રૂપ બનાવીને વાક્યોમાં એનો ઉપયોગ કરો.

## संस्कृत-वाक्यानि ।

१ कृषीवलाः भूमिं कृषन्ति । ते भूमिं कदा कर्क्ष्यन्ति । प्रथमं राजा भूमिं कृषते, पश्चात् प्रजाजनाः कृषन्ते ।

२ सः वस्त्रं कूपे क्षिपति । अहं मम वस्त्रं तत्र न अक्षिपम् । तौ तत्र किं क्षेप्स्यते ?

३ तस्य भृत्यः तुदति । सः अतुदत् । तौ न अतुदेताम् । स तत्र तोत्स्यति किम् ?

४ रामः लक्ष्मणं दिदेश । स त्वां कदा देक्ष्यति ? अहं तं न अदिशम् । स एव सर्वान् दिशतु ।

५ स धान्यं भृज्जते । स न बभर्जे । अहं एव चणकान् भ्रक्ष्यामि । त्वं भ्रक्ष्यसि किम् ?

६ सः अद्य तं मिलति । न स गतमासे एव मिमेल । त्वं कदा मेलिष्यसि ? सः न अमिलत् ।

७ स इदानीं जलं मुञ्चति । मेघाः आकाशात् जलं मुञ्चन्ति । त्वं तं पशुं कदा मोक्ष्यसि ?

८ त्वं स्वकीयं गृहं कदा लेप्स्यसे ? अहं तत्स्थानं न लिम्पामि । स एव लिम्पतु ।

९ मनुष्यः ध्यानेन सुखं विन्दते । आत्मना विन्दते वीर्यम् । विद्यया विन्दतेऽमृतम् ।

१० स उद्याने वृक्षेभ्यः जलं सिञ्चति । त्वमपि तथैव जलं सिञ्चस्व । वद, त्वं कदा जलं सेक्ष्यसे ?

पाठक आ प्रमाणे वाक्य बनाववानो अभ्यास करे. अहिं षष्ठ गणना धातुओनुं प्रकरण समाप्त थयुं. हवे आगळ चतुर्थ गणना धातुओनो विचार करवामां आवशे.

—०—

# પાઠ ૪

## रामायणम् ।

एवं विराधं राक्षसं हत्वा ते शरभंगस्याश्रमं जग्मुः। स तु तपोधनो रामं दृष्ट्वोवाच "हे नरव्याघ्र रामचंद्र ! तवागमनस्य वृत्तान्तं श्रुत्वा, त्वामतिथिमदृष्ट्वा ब्रह्मलोकं न गच्छामि, इति निश्चयो मया कृतः । अतस्त्वां द्रष्टुकाम एवाहं स्थितोऽत्र । "

इत्युक्त्वा रामं संपूज्य, तस्यातिथ्यं कृत्वा स्वयमचिरादेवाग्निं प्रविवेश ।

ततो बहवस्तापसा राममभिगम्योचुः " महानयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो राक्षसैरनाथवद्धन्यते । अतोऽस्माकं त्वमेव नाथः । एहि पश्य । घोरै राक्षसैर्महत् कंदनं कृतम् । एवं तपस्विनां दुःखं न वयं मृष्यामः । त्वां च वयं सर्वेऽपि रक्षणार्थं समुपस्थिताः । "

तापसानां वचनं श्रुत्वा राम उवाच– " भो भो विप्राः! मम वनवासो भवतां दुःखविनाशाय तथा च भवतां रक्षणायैवास्ति । अतो भवद्भिर्भयं न कर्तव्यम् । अहं शीघ्रमेव सर्वान् राक्षसान् नाशयिष्यामि । " इति ।

ततः सीतारामलक्ष्मणास्तैः सर्वैरपि द्विजैः सह अग्रे

सुतीक्ष्णस्याश्रमपदं जग्मुः । अग्रतो रामो मध्ये सीता पृष्ठतो धनुष्पाणिर्लक्ष्मणश्चेति क्रमेण ते सर्वेषां तपस्विनामाश्रमाञ्जग्मुः । तत उर्ध्वं रामोऽगस्त्याश्रमं सीतया लक्ष्मणेन च सह गतः ।

किंचिद् दूरं गत्वा रामोऽगस्त्याश्रमं ददर्श । तत्र गत्वा महाबाहू रामः सूर्यसममगस्त्यं मुनिं दृष्ट्वा, तं मुनिमभिवाद्य तत्रैव कृताञ्जलिस्तस्थौ ।

मुनिश्रेष्ठोऽगस्त्यो राममुवाच– " भवान् मम पूज्योऽतिथिर्मान्यश्च । ममाश्रमे विश्वकर्मणा निर्मितं हेमवज्रविभूषितं दिव्यं चापं विद्यते ब्रह्मणा दत्ताश्च शरोत्तमा अत्र सन्ति । अक्षय्यसायकौ तूणीरौ च । रजतकोशश्च असिरस्ति । हे राम ! तव जयाय एतान् प्रतिगृह्णीष्व । तत्सर्वं श्रेष्ठमायुधजातं रामाय दत्वाऽगस्त्यो रामं पुनरब्रवीत् । इतो द्वियोजनादूर्ध्वं पंचवटीति विश्रुतो देशः । तत्र गत्वा स्वकीयं आश्रमं कुरु । स एव प्रदेशो यत्र त्वया अत ऊर्ध्वं वस्तव्यम् ।

अथैवं पञ्चवटीं गच्छन्रघुनंदनो महाकायं भीमपराक्रमं गृध्रं दृष्टवान् । तं गृध्रं दृष्ट्वा तौ महाभागौ रामलक्ष्मणौ तं राक्षसं मेनाते " को भवान् "इति पृष्टस्तु स गृध्र उवाच- " वत्स राम ! ममागमनः पितुर्वयस्यं विद्धि । " इति । पूजयित्वा पितृसखं गृध्रं राघवस्तस्य कुलं नाम च पप्रच्छ ।

स आचचक्षे । प्रजापतेर्दक्षस्य षष्टिर्दुहितरः । तासां अष्टौ कश्यपः प्रतिजग्राह । तासु ताम्रायाः शुकी नाम्नी एकतमा कन्यका बभूव । तस्याः पौत्री विनतानाम्न्यासीत् । विनतायाः पुत्रयोर्गरुडारुणयोर्मध्येऽरुणादहं जातः । जटायुरिति मे नाम । संपातिश्च ममाग्रजः । सोऽहं यदीच्छसि ते सहायको भविष्यामि । सलक्ष्मणे त्वयि बहिर्याते ऽहं सीतां रक्षिष्ये । इति । एवं जटायुषा कथितं वृत्तान्तं रामः शुश्राव । श्रुत्वा च तं पितुर्मित्रं ज्ञात्वा पूजयामास ।

ततस्तेन पक्षिणा सार्धं पञ्चवटीं गत्वा रामलक्ष्मणौ रम्ये गोदावरी–प्रदेशे यथा कथितमगस्त्येन तथाऽऽश्रमं चक्रतुः । बहुफले तस्मिन्प्रदेशे सह सीतया रामलक्ष्मणौ सुखेन कंचित्कालं न्यवसताम् ।

अथ कदाचिद् दशग्रीवस्य रक्षसो भगिनी शूर्पणखा देवतोपमं रामं विलोक्य तत्रागता । तं रामं दृष्ट्वा सा राक्षसी काममोहिता बभूव । तां दृष्ट्वा रामोऽपि स्मितपूर्वमब्रवीत् । 'कृतदारोऽस्मि । इयं मम दयिता भार्या सीता । अतो मम भ्रातरं भज । ' एतच्छ्रुत्वा रामं विसृज्य राक्षसी लक्ष्मणं प्राप्ता । तामागतां लक्ष्मणोऽब्रवीत् । ' कथं दासस्य मे भार्या भूत्वा त्वं दासी भवितुमिच्छसि ? परवशोऽहम् । मम भ्राता राम एव त्वां योग्यः भविष्यति । गच्छ तं प्रति । '

सा पुनः रामं गत्वोवाच । 'एवं भूतां ते मानुषीं भार्यां भक्षयिष्यामि । निःसपत्ना भूत्वा त्वया सह चरिष्यामि ।' तच्छ्रुत्वा कुपितो रामो लक्ष्मणमब्रवीत् । 'अनार्यैः सहार्यैः कथंचनैवं परिहासो नैव कार्यः । अलं परिहासेन ।'

लक्ष्मणस्तु तच्छ्रुत्वा खड्गमुद्धृत्य तस्याः शूर्पणखायाः कर्णनासिके चिच्छेद । सा तु शूर्पणखा तदा विस्वरं विनद्य यथागतं वनं प्रदुद्राव । सा ततो रुधिरं विक्षरन्ती घोरदर्शना शूर्पणखा भ्रातुः खरस्य स्थानं गत्वा सर्वं वृत्तान्तं शशंस ।

एवंविधां भगिनीं शूर्पणखां दृष्ट्वा खरः खरतरं वाचं स्वभ्रातरं दूषणनामानमुवाच । 'हे भ्रातः ! चित्तानुवर्तिनां मम राक्षसानां चतुर्दश सहस्राणि सज्जीकुरु इति ।' एवं ब्रुवाणस्य तस्यैवं दूषण आचचक्षे । 'युक्तो महारथः सदश्वैः ।' निर्यातानि च घोराणां राक्षसानां चतुर्दश सहस्राणि ।

तानागतान्राक्षसान् रामो ददर्श । रामोऽपि चापमुद्यम्य ज्याघोषेण दिशः पूरयन् तत्रैव सज्जीभूत्वा स्थितः । क्रुद्धा निशाचरा रामं नानाविधैः शस्त्रैरभ्यवर्षन्त । रामस्य शरा अपि राक्षसानां प्राणानाददुः । क्रमेणैकेनैव शरेण रामेण राक्षसानां चतुर्दश-सहस्राणि हतानि ।

राक्षसानां वधादूर्ध्वं रामस्तत्रैव सीतया सह लक्ष्मणेन च सह उवास ।

---

## शब्दार्थ

| | |
|---|---|
| नरव्याघ्रः = મનુષ્ય શ્રેષ્ઠ. | पितृसखः = પિતાના મિત્ર. |
| धनुष्पाणिः = જેણે હાથમાં ધનુષ લીધું છે. | प्रतिजग्राह = સ્વીકાર કરી. |
| कृताञ्जलिः = હાથ જોડીને. | पौत्री = પુત્રીની પુત્રી. |
| हेमवज्रविभूषितः = સુવર્ણ અને વજ્રથી સુશોભિત. | न्यवसताम् = વાસ કર્યો. |
| अक्षय्यसायकः = જેમાંથી બાણ ખૂટતાં નથી. | कृतदारः = જેણે લગ્ન કર્યાં છે. |
| रजतकोशः = ચાંદીની મ્યાન જેમાં તલવાર રહે છે. | दयिता = પ્રિયા. |
| आयुधजातम् = શસ્ત્રોનો સમૂહ. | परवशः = પરતંત્ર. |
| द्वियोजनम् = બે જોજન. | कथंचन = કોઈ પણ પ્રકારે. |
| वयस्यः = મિત્ર.. | अलं = બસ. |
| | विस्वरं = બેસુર. |
| | खरतरं = વધારે કઠોર. |
| | निर्यात = ગયેલા. |
| | सज्जीभूतः = તૈયાર. |
| | आददुः = લીધું. |

—:०—०:—

# પાઠ ૫

## ચતુર્થગણના પરસ્મૈપદી ધાતુ

જે પ્રમાણે 'प्रथम' ગણના ધાતુઓને "अ", दशम ગણના ધાતુઓને 'अय' અને षष्ठ ગણના ધાતુઓને "अ" લાગે છે તે પ્રમાણે चतुर्थ ગણના ધાતુઓને "य" લાગે છે. ઉદાહરણ જુઓ—

१ प्रथमगण = वद् + अ + ति = वदति।
२ दशमगण = भक्ष् + अय + ति = भक्षयति।
३ षष्ठ गण = विश् + अ + ति = विशति।
४ चतुर्थगण = क्रुध् + य + ति = क्रुध्यति।

પાઠક આ ચિન્હોને યાદ રાખે, આ ગણચિન્હ છે. એનું નામ વિકરણ છે. હવે चतुर्थ ગણના રૂપોનો વિધિ બતાવવામાં આવે છે. પાઠક સમજી ગયા હશે કે "ति" ની પહેલાં "य" વધારે લાગે છે. બાકી બીજું प्रथम ગણના સરખુંજ થાય છે.

### ચતુર્થગણ પરસ્મૈપદી ધાતુ

'अस्' = (ફેંકવું)

१ लट् (वर्तमान काल) = १ अस्यति, अस्यतः, अस्यन्ति। २ अस्यसि, अस्यथः, अस्यथ। ३ अस्यामि, अस्याव, अस्यामः॥

'क्रुध्' = (ક્રોધ કરવો, ગુસ્સો કરવો)

२ लिट् (अनद्यतन परोक्षभूत) = १ चुक्रोध, चुक्रुधतुः, चुक्रुधुः। २ चुक्रोधिथ, चुक्रुधथुः, चुक्रुध। ३ चुक्रोध, चुक्रुधिव, चुक्रुधिम॥

'क्लम्' = ( થાકવું )

३ लुट् ( अनद्यतन भविष्य ) = १ क्लमिता, क्लमितारौ, क्लमितारः। २ क्लमितासि, क्लमितास्थः, क्लमितास्थ। ३ क्लमितास्मि, क्लमितास्वः, क्लमितास्मः ॥

'क्रुध्' = ( ક્રોધ કરવો )

४ लृट् ( भविष्यकाल ) = १ क्रोधिष्यति, क्रोधिष्यतः क्रोधिष्यन्ति। २ क्रोधिष्यसि, क्रोधिष्यथः, क्रोधिष्यथ। ३ क्रोधिष्यामि, क्रोधिष्यावः, क्रोधिष्यामः ॥

५ लेट् નો પ્રયોગ ભાષામાં નહિ, ફક્ત વેદમાં થાય છે.

'कुप्' = ( ક્રોધ કરવો )

६ लोट् ( आज्ञार्थ ) = १ कुप्यतु, कुप्यताम्, कुप्यन्तु। २ कुप्य, कुप्यतम्, कुप्यत। ३ कुप्यानि, कुप्याव, कुप्याम ॥

७ लङ् ( अनद्यतन भूत ) = १ अकुप्यत्, अकुप्यताम्, अकुप्यन्। २ अकुप्यः, अकुप्यतम्, अकुप्यत। ३ अकुप्यम्, अकुप्याव, अकुप्याम ॥

८ लिङ् ( विधिलिङ् ) = १ कुप्येत्, कुप्येताम्, कुप्येयुः। २ कुप्येः, कुप्येतम्, कुप्येत। ३ कुप्येयम्, कुप्येव, कुप्येम ॥

( आशीर्लिङ् ) = १ कुप्यात्, कुप्यास्ताम्, कुप्यासुः। २ कुप्याः, कुप्यास्तम्, कुप्यास्त। ३ कुप्यासम्, कुप्यास्व, कुप्यास्म ॥

९ लुङ् = ( भूतकाल ) = १ अकुपत्, अकुपताम्, अकुपन्। २ अकुपः, अकुपतम्, अकुपत। ३ अकुपम्, अकुपाव, अकुपाम ॥

१० लङ्=(हेतुहेतुमद्भावार्थे)=१ अकोपिष्यत्, अकोपिष्यताम्, अकोपिष्यन् । २ अकोपिष्यः, अकोपिष्यतम्, अकोपिष्यत । ३ अकोपिष्यम्, अकोपिष्याव, अकोपिष्याम ॥

આ પ્રમાણે નીચે લખેલા ધાતુઓના રૂપ બનાવો.

चतुर्थगण પરસ્મૈપદ ધાતુ

अस् = ( ફેંકવું ) । अस्यति । आस । असिता । असिष्यति ।

ऋध् = ( સમૃદ્ધ થવું ) ऋध्यति । आनर्ध । अर्धिता । अर्धिष्यति ।

कुप् = ( ક્રોધ કરવો ) कुप्यति । चुकोप । कोपिता । कोपिष्यति ।

कृश् = ( અશકત થવું ) कृश्यति । चकर्श । कर्शिता । कर्शिष्यति ।

क्रुध् = (ગુસ્સો કરવો) क्रुध्यति । चुक्रोध । क्रोद्धा । क्रोत्स्यति ।

क्लम् = ( થાકી જવું ) क्लाम्यति । चक्लाम । क्लमिता । क्लमिष्यति ।

क्लिद् = ( ભીંજાવું ) क्लिद्यति । चिक्लेद । क्लेत्ता, क्लेदिता । क्लेत्स्यति, क्लेदिष्यति ।

क्षम् = ( સહન કરવું ) क्षाम्यति । चक्षाम । क्षमिता, क्षन्ता । क्षमिष्यति, क्षंस्यति ।

क्षिप् = ( ફેંકવું ) क्षिप्यति । चिक्षेप । क्षेप्ता । क्षेप्स्यति ।

क्षुध् = ( ભૂખ લાગવી ) क्षुध्यति । चुक्षोध । क्षोद्धा । क्षोत्स्यति ।

३ लोट् = ( आज्ञार्थ ) = १ तृप्यतु, तृप्यताम्, तृप्यन्तु । २ तृप्य, तृप्यतम्, तृप्यत । ३ तृप्याणि, तृप्याव, तृप्याम ।

४ लिङ् ( विधिलिङ ) = १ तृप्येत्, तृप्येताम्, तृप्येयुः । २ तृप्येः, तृप्येतम्, तृप्येत । ३ तृप्येयम्, तृप्येव, तृप्येम ।

( आशीर्लिङ् ) = १ तृप्यात्, तृप्यास्ताम्, तृप्यासुः । २ तृप्याः, तृप्यास्तम्, तृप्यास्त । ३ तृप्यासम्, तृप्यास्व, तृप्यास्म ॥

'त्रस्' ( ત્રાસ પામવું )

५ लृट् ( भविष्यकाल )=१ त्रसिष्यति, त्रसिष्यतः, त्रसिष्यन्ति । २ त्रसिष्यसि, त्रसिष्यथः, त्रसिष्यथ । ३ त्रसिष्यामि, त्रसिष्यावः, त्रसिष्यामः ॥

'नृत्' ( નાચવું )

६ लिट् = ( अनद्यतन परोक्षभूत ) = ननर्त, ननृततुः, ननृतुः । २ ननर्तिथ, ननृतथुः, ननृत । ३ ननर्त, ननृतिव, ननृतिम ॥

આ પ્રમાણે નીચે આપેલા ધાતુઓના રૂપ બનાવી શકશે—

चतुर्थ ગણુ પરસ્મૈપદના ધાતુ.

तृप् ( તૃપ્ત થવું ) तृप्यति । ततर्प । तर्पिता, तर्प्ता । तर्पिष्यति । तर्प्स्यति ।

त्रस् ( ત્રાસ પામવું ) त्रस्यति । तत्रास । त्रसिता । त्रसिष्यति ।

तृष् ( તરસ લાગવી ) तृष्यति । ततर्ष । तर्षिता । तर्षिष्यति ।

दम् ( વશ થવું ) दाम्यति । ददाम । दमिता । दमिष्यति ।

दस् ( નાશ થવું ) दस्यति । ददास । दसिता । दसिष्यति ।

दिव् ( ક્રીડા કરવી ) दीव्यति । दिदेव । देविता । देविष्यति ।

दुष् ( દુષિત થવું ) दुष्यति । दुदोष । दोष्टा । दोक्ष्यति ।
दृप् ( ગર્વ કરવો ) दृप्यति । ददर्प । दर्पिता, दर्प्ता, द्रप्ता ।
दर्पिष्यति, दर्प्स्यति, द्रप्स्यति ।
दो ( ટુકડા કરવા ) द्यति । ददौ । दाता । दास्यति ।
द्रुह् ( દ્વેષ કરવો ) द्रुह्यति । दुद्रोह । द्रोहिता, द्रोग्धा, द्रोढा ।
द्रोहिष्यति, ध्रोक्ष्यति ।
नश् ( નાશ પામવું ) नश्यति । ननाश । नशिता, नंष्टा ।
नशिष्यति, नंक्ष्यति ।
नृत् ( નાચવું ) नृत्यति । ननर्त । नर्तिता । नर्तिष्यति, नर्त्स्यति ।
पुष् ( પુષ્ટ થવું ) पुष्यति । पुपोष । पोष्टा । पोक्ष्यति ।
भ्रम् ( ભમાવવું ) भ्राम्यति । बभ्राम । भ्रमिता । भ्रमिष्यति ।
भ्रंश् ( પડવું ) भ्रश्यति । बभ्रंश । भ्रंशिता । भ्रंशिष्यति ।
मद् ( હર્ષ પામવું ) माद्यति । ममाद । मदिता । मदिष्यति ।
मिद् ( પ્રીતિ કરવી ) मेद्यति । मिमेद । मेदिता । मेदिष्यति ।
मुह् ( મૂર્છિત થવું ) मुह्यति । मुमोह । मोहिता । मोहिष्यति ।
मृग् ( શોધવું, શિકાર કરવો ) मृग्यति । ममर्ग । मर्गिता
मर्गिष्यति ।
मृष् ( સહન કરવું ) मृष्यति । ममर्ष । मर्षिता । मर्षिष्यति ।
यस् ( પ્રયત્ન કરવો ) यस्यति । ययास । यसिता । यसिष्यति ।
राध् ( વધવું ) राध्यति । रराध । राद्धा । रात्स्यति ।
रिप् ( નાશ પામવું ) रिप्यति । रिरेप । रेपिता । रेपिष्यति ।
रुप् ( હિંસા કરવી ) रुप्यति । रुरोप । रोपिता, रोप्टा । रोपिष्यति ।
लुप् ( ભ્રાન્ત થવું ) लुप्यति । लुलोप । लोपिता । लोपिष्यति ।

लुभ् ( લોભ કરવો ) लुभ्यति । लुलोभ । लोभिता, लोब्धा । लोभिष्यति ।

व्यध् ( વિંધવું ) विध्यति । विव्याध । व्यद्धा । व्यत्स्यति ।

व्रीड् ( શરમાવું ) व्रीड्यति । विव्रीड । व्रीडिता । व्रीडिष्यति ।

शम् ( શાંત થવું ) शाम्यति । शशाम । शमिता । शमिष्यति ।

शुध् ( શુદ્ધ થવું ) शुध्यति । शुशोध । शोद्धा । शोत्स्यति ।

शुष् ( સુકાવું ) शुष्यति । शुशोष । शोष्टा । शोक्ष्यति ।

शो ( બારીક કરવું ) श्यति । शशौ । शाता । शास्यति ।

श्रम् ( થાકવું, શ્રમ કરવો ) श्राम्यति । शश्राम । श्रमिता । श्रमिष्यति ।

श्लिष् ( ભેટવું ) श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति ।

ष्ठिव् ( થૂંકવું ) ष्ठीव्यति । तिष्ठेव । ष्ठेविता । ष्ठेविष्यति ।

सह् ( તૃપ્ત થવું ) सह्यति । ससाह । सहिता । सहिष्यति ।

सिध् ( સિદ્ધ થવું ) सिध्यति । सिषेध । सेद्धा । सेत्स्यति ।

सीव् ( સીવવું ) सीव्यति । सिषेव । सेविता । सेविष्यति ।

स्निह् ( સ્નેહ કરવો ) स्निह्यति । सिष्णेह । स्नेहिता । स्नेहिष्यति

स्विद् ( પરસીનો આવવો ) स्विद्यति । सिष्वेद । स्वेत्ता । स्वेत्स्यति ।

हृष् ( ખુશ થવું ) हृष्यति । जहर्ष । हर्षिता । हर्षिष्यति ।

संस्कृत-वाक्यानि ।

१ कथां श्रुत्वा श्रुत्वा अहं न तृप्यामि । स त्वां नैव तर्पिष्यति । परशुरामस्य पितरः तत्रपुः । देवाः तृप्यन्तु ।

२ राक्षसाः अनेन कारणेन त्रस्यन्ति । के एवं न

त्रसिष्यन्ति ? भवन्तः किमर्थं त्रसन्ति ? यूयं सर्वे अपि मा त्रस्यत ।

३ सर्वे बालका इदानीं दीव्यन्ति । यूयं कदा देविष्यथ ? वयं अद्य नैव देविष्यामः । स मा दीव्यतु । अक्षैर्मा दीव्यः ।

४ शत्रवः द्रुह्यन्ति, ते सर्वे द्रुह्यन्तु, किन्तु अहं कदापि नैव द्रुह्यामि । त्वमपि द्रोहिष्यसि किम् ?

५ सर्वे प्राणिनः नश्यन्ति, सर्वं जगत् नश्यति । अपि तु आत्मा नैव नश्यति ।

६ नटा नृत्यन्ति । बालका नाट्यशालायां नृत्यन्तु, परन्तु ते अन्यत्र न नृत्येयुः । अहं गृहे एव नर्तिष्यामि ।

७ पुरुषः अन्नेन पुष्यति । शरीरं अन्नेन विना न पुष्यति । त्वं कथं पोक्ष्यसि । स रसेन पुष्यतु ।

८ राजा राज्यात् भ्रश्यति । तारकाः आकाशाद् भ्रश्यन्ति । भृत्यः प्रासादात् भ्रश्यति । त्वं तस्मात् स्थानान्मा भ्रश्य ।

९ त्वं लुभ्यसि । अहं कदापि नैव लुभ्यामि । मूर्खाः लुभ्यन्तु । ज्ञानिनः मा लुभ्यन्तु ।

१० शरीराणि जलेन शुध्यन्ति । मनः सत्येन शुध्यति । ज्ञानेन बुद्धिः शुध्यति । तपसा आत्मा शुध्यतु ।

११ यत् त्वया प्रतिपादितं तत् कथं सिध्यति ? त्वं स्वसिद्धान्तं सेत्स्यसि किम् ?

१२ नराः विजयेन हृष्यन्ति । सर्वेऽपि धनप्राप्त्या हर्षिष्यन्ति । पुत्रस्य मुखं दृष्ट्वा मातापितरौ हृष्यतः ।



## પાઠ ૭

એ ધાતુઓના રૂપ નીચે બતાવ્યા પ્રમાણે થાય છે

ચતુર્થ ગણુ આત્મનેપદી ધાતુ.

'क्लिश्' ( ક્લેશ ભોગવવો )

१ लट् ( वर्तमानकाल ) = १ क्लिश्यते, क्लिश्येते, क्लिश्यन्ते । २ क्लिश्यसे, क्लिश्येथे, क्लिश्यध्वे । ३ क्लिश्ये, क्लिश्यावहे, क्लिश्यामहे ॥

'खिद्' ( ખિન્ન થવું )

२ लङ् (अनद्यतनभूत) = १ अखिद्यत, अखिद्येताम्, अखिद्यन्त । २ अखिद्यथाः, अखिद्येथाम्, अखिद्यध्वम् । ३ अखिद्ये । अखिद्यावहि, अखिद्यामहि ॥

'तप्' ( ઐશ્વર્ય યુક્ત થવું )

३ लोट् ( आज्ञार्थ ) = १ तप्यताम्, तप्येताम्, तप्यन्ताम् । २ तप्यस्व, तप्येथाम्, तप्यध्वम् । ३ तप्यै, तप्यावहै, तप्यामहै ॥

'पुर्' ( ભરવું )

४ लिङ् ( विधिलिङ् ) = १ पूर्येत, पूर्येयाताम्, पूर्येरन् । २ पूर्येथाः, पूर्येयाथाम्, पूर्येध्वम् । ३ पूर्येय, पूर्येवहि, पूर्येमहि ॥

'युज्' ( ધ્યાન ધરવું )

५ लिट् ( अनद्यतन परोक्षभूत ) = १ युयुजे, युयुजाते, युयुजिरे । २ युयुजिषे, युयुजाथे, युयुजिध्वे । ३ युयुजे, युयुजिवहे, युयुजिमहे ॥

'सृज्' ( છોડવું )

६ लृट् ( भविष्यकाल ) = १ स्रक्ष्यते, स्रक्ष्येते, स्रक्ष्यन्ते । २ स्रक्ष्यसे, स्रक्ष्येथे, स्रक्ष्यध्वे । ३ स्रक्ष्ये, स्रक्ष्यावहे, स्रक्ष्यामहे ॥

चतुर्थगण આત્મનેપદ ધાતુ.

क्लिश् ( દુઃખ ભોગવવું ) क्लिश्यते । चिक्लिशे । क्लेशिता । क्लेशिष्यते ।
क्षी ( હિંસા કરવી ) क्षीयते । चिक्षिये । क्षेता । क्षेष्यते ।
खिद् ( ખેદ પામવું ) खिद्यते । चिखिदे । खेत्ता । खेत्स्यते ।
जन् ( જન્મ લેવો ) जायते । जज्ञे । जनिता । जनिष्यते ।
डी ( ઉડવું ) डीयते । डिड्ये । डयिता । डयिष्यते ।
तप् ( ઐશ્વર્ય યુક્ત થવું ) तप्यते । तेपे । तप्ता । तप्स्यते ।
दीप् ( પ્રકાશવું ) दीप्यते । दिदीपे । दीपिता । दीपिष्यते ।
दू ( દુઃખી થવું ) दूयते । दुदुवे । दविता । दविष्यते ।
पत् ( ઐશ્વર્ય પ્રાપ્ત થવું ) पत्यते । पेते । पतिता । पतिष्यते ।
पद् ( જવું ) पद्यते । पेदे । पत्ता । पत्स्यते ।
पी ( પીવું ) पीयते । पिप्ये । पेता । पेष्यते ।
पूर् ( ભરવું ) पूर्यते । पुपूरे । पूरिता । पूरिष्यते ।
प्री ( પ્રીતિ કરવી ) प्रीयते । पिप्रिये । प्रेता । प्रेष्यते ।
बुध् ( જાણવું ) बुध्यते । बुबुधे । बोद्धा । भोत्स्यते ।

मन् ( મનન કરવું ) मन्यते । मेने । मन्ता । मंस्यते ।
युज् ( ધ્યાન લગાવવું ) युज्यते । युयुजे । योक्ता । योक्ष्यते ।
युध् ( લડવું ) युध्यते । युयुधे । योद्धा । योत्स्यते ।
विद् ( થવું, હોવું ) विद्यते । विविदे । वेत्ता । वेत्स्यते ।
सू ( પ્રસૂત થવું ) सूयते । सुषुवे । सविता । सोष्यते, सविष्यते ।
सृज् ( છોડવું ) सृज्यते । ससृजे । स्रष्टा । स्रक्ष्यते ।

પાઠક હવે એ ધાતુઓનો ઉપયોગ કરી શકશે.

## संस्कृत-वाक्यानि ।

१ त्वं किमर्थं एवं क्लिश्यसे । स क्लिश्यतां परन्तु त्वं मा क्लिश्यस्व । लोकहेतोः राजा क्लिश्यते ।

२ ब्राह्मणः तत्र खिद्यते । त्वं खेत्स्यसे किम् । अजायमानः बहुधा विजायते । काष्ठात् अग्निः जज्ञे ।

३ विश्वामित्रः ऋषिषु दीप्यते । अहं दीपेन तव दीपं दीपिष्ये । स दीप्यताम् ।

४ यथा स बुध्यते तथा त्वं न बुध्यसे । तव शिष्यः यथा बुबुधे तथा स बालः न बुध्यते ।

५ अहं मन्ये तवैव एतत् राज्यमिति । त्वं किं मन्यसे ? यदि त्वं एवं मंस्यसे तर्हि अहं किमपि न वदिष्यामि ।

६ यदा त्वं युध्यसे तदा तव पदातयः कुत्र भवन्ति । यदि त्वं इच्छसि तर्हि मया सह युध्यस्व ।

७ तव मित्रं अत्र विद्यते किम् ? मम गृहे महाभारतस्य

पुस्तकं विद्यते ।

८ त्वं अस्मिन् देशे किमर्थं तप्यसे ? सः अपि तथा न तप्यते यथा त्वं तप्यसे ।

९ पक्षिणः आकाशे डीयन्ते । उष्णकाले मयूराः आकाशे किमर्थं न डीयन्ते । स डयिष्यते किम् ?

પાઠક આ પ્રમાણે પૂર્વોક્ત ધાતુઓના રૂપ બનાવી વાક્યોમાં એમનો ઉપયોગ કરી શકે છે. અહિં चतुर्थ ગણના આત્મનેપદી ધાતુઓનો વિચાર થયો. હવે चतुर्थ ગણના ઉભયપદી ધાતુઓનો વિચાર કરાય છે—

**चतुर्थ ગણના ઉભયપદી ધાતુ.**

ઉભયપદી ધાતુઓના રૂપ પરસ્મૈપદી અને આત્મનેપદી એમ બે રીતે થાય છે.

'शुच्' ( શુદ્ધ થવું )

१ लट् ( वर्तमानकाल )

परस्मैपद = १ शुच्यति, शुच्यतः, शुच्यन्ति । २ शुच्यसि, शुच्यथः, शुच्यथ । ३ शुच्यामि, शुच्यावः, शुच्यामः ॥

आत्मनेपद - १ शुच्यते, शुच्येते, शुच्यन्ते । २ शुच्यसे, शुच्येथे, शुच्यध्वे । ३ शुच्ये, शुच्यावहे, शुच्यामहे ॥

२ 'लङ्' = ( अनद्यतनभूत )

परस्मैपद = १ अशुच्यत्, अशुच्यताम्, अशुच्यन् । २ अशुच्यः, अशुच्यतम्, अशुच्यत । ३ अशुच्यम्, अशुच्याव, अशुच्याम ॥

आत्मनेपद = १ अशुच्यत, अशुच्येताम्, अशुच्यन्त ।

२ अशुच्यथाः, अशुच्येथाम्, अशुच्यध्वम् । ३ अशुच्ये, अशुच्यावहि, अशुच्यामहि ।

३ 'लोट्' ( आज्ञार्थ )

परस्मैपद = १ शुच्यतु, शुच्यताम्, शुच्यन्तु । २ शुच्य, शुच्यतम्, शुच्यत । ३ शुच्यानि, शुच्याव, शुच्याम ॥

आत्मनेपद = १ शुच्यताम्, शुच्येताम्, शुच्यन्ताम् । २ शुच्यस्व, शुच्येथाम्, शुच्यध्वम् । ३ शुच्यै, शुच्यावहै, शुच्यामहै ॥

४ 'लिङ्' ( विधिलिङ् )

परस्मैपद = १ शुच्येत्, शुच्येताम्, शुच्येयुः । २ शुच्येः, शुच्येतम्, शुच्येत । ३ शुच्येयम्, शुच्येव, शुच्येम ॥

आत्मनेपद = १ शुच्येत, शुच्येयाताम्, शुच्येरन् । २ शुच्येथाः, शुच्येयाथाम्, शुच्येध्वम् । ३ शुच्येय, शुच्येवहि, शुच्येमहि ॥

આ પ્રમાણે બીજા લકારોના રૂપ પણ બનાવી શકાય છે.

चतुर्थ गणना ઉભયપદી-धातु.

रज् ( રંગવું ) रज्यति ते । ररञ्ज-ररञ्जे । रंक्ता । रंक्ष्यति ते ।
शुच् ( શુદ્ધ કરવું ) शुच्यति-ते । शुशोच-शुशुचे । शोचिता । शोचिष्यति-ते ।

संस्कृत-वाक्यानि

१ रंजयिता वस्त्राणि रज्यति । त्वं किं न वस्त्रं रज्यसे ? अहं नैव रंक्ष्यामि ।

२ त्वं मर्वं शुच्यसे । अहं न शुच्ये । वयं शुच्यामहे । त्वं शो[illegible]ष्यामि । युवां शोचिष्यथः । यूयं शोचिष्यथ ।

અહિં चतुर्थ ગણુનો વિચાર સમાપ્ત થાય છે. હવે પછી द्वितीय ગણુના ધાતુઓના વિચાર થશે. એની વચ્ચે એક વાચનપાઠ વાંચી જુઓ.



## પાઠ ૮

### रामायणम् ।

ततः शूर्पणखा दूषणं खरं त्रिशिरसं च रामेण हतं दृष्ट्वा परमोद्विग्ना रावणपालितां लंकां जगाम, ददर्श च दशग्रीवम् । तं रावणमुपगम्य भयविह्वला शूर्पणखाऽब्रवीत् । " हे रावण ! त्वं कामभोगेषु प्रमत्तः घोद्भव्यं घोरं भयं नावबुध्यसे ! कामवृत्तं लुब्धं ग्राम्येषु भोगेषु सक्तं महीपतिं प्रजाः बहु न मन्यन्ते । एकेन रामेण राक्षसानां चतुर्दश सहस्राणि हतानि, खरोऽपि दूषणेन सह हतः । दण्डकारण्यं निर्भयं कृतम् । ऋषयो निर्भयाः जाताः । कथं त्वं सर्वमेतत् नावबुध्यसे ?"

एतच्छ्रुत्वा रावणः संक्रुद्धस्तां पुनः पप्रच्छ । " कोऽयं रामः ? किं वीर्यः ? तस्य किं रूपम् ? किमर्थं प्रविष्टो दुर्गमं दण्डकारण्यम् ? किं च तस्यायुधं येन राक्षसा हताः ? केन च त्वं एवं विरूपिता ? " इति ।

रावणस्य भाषणं श्रुत्वा क्रोधमूर्च्छिता शूर्पणखा रामलक्ष्मणयोः पराक्रममाख्यातवती । सा रावणं पुनरुवाच– " हे दशमुख ! रामस्य धर्मपत्नी सीता नाम विशालाक्षी सुंदरी, तथारूपा नारी मया कुत्रापि न दृष्टपूर्वा । यादृशी सीता तादृशी न देवी, न गंधर्वी, न यक्षी, न किन्नरी । अतः सा तवैवानुरूपा भार्या । त्वं च तस्या योग्यः पतिः । अहं तामानेतुमुद्यताऽस्मि, किन्तु क्रूरेण लक्ष्मणेन विरूपिताऽस्मि ।" इति ।

श्रुत्वा तच्छूर्पणखावचनं राक्षसाधिपो रावणो रथशालां गत्वा " रथः संयुज्यताम् " इति सूतं संचोदयामास ।

रावणो रथमास्थाय समुद्रस्य पारं गत्वा मारीचस्याश्रमं ददर्श । तत्र जटामण्डलधारिणं नियताहारं मारीचं नाम राक्षसं दृष्ट्वा उवाच– " भवान् हि मे परमा गतिः । जनस्थाने मानुषेण त्रिशिरदूषणादयो राक्षसा हताः । मम भगिनी शूर्पणखाऽपि कर्णनासिकाछेदनेन विरूपिता । अतोऽस्य भार्यां जनस्थानादानयिष्यामि । तत्र मे सहायो भव । सीतायाः संमुखं सौवर्णो मृगो भूत्वा विचर । त्वां तु दृष्ट्वा सीता निःसंशयं अयं गृह्यतामिति भर्तारं लक्ष्मणं च कथयिष्यति । रामलक्ष्मणौ अपि त्वद्ग्रहणार्थं आश्रमाद् बहिर्गमिष्यतः । यदा ताभ्यां रामलक्ष्मणाभ्यां विहीन आश्रमो

भविष्यति, अहं तत्र प्रविश्य सीतामाहरिष्यामि ।

रावणस्यैतज्ज्ञापणं श्रुत्वा महातेजा मारीचः प्रत्युवाच " हे राजन् ! सुलभाः प्रियवादिनः । अप्रियस्य पथ्यस्य च श्रोता वक्ता च दुर्लभः । अयुक्ताचारश्चपलस्त्वं महावीर्यगुणोपेतं रामं न बुध्यसे । संक्रुद्धो रामो लोकानराक्षसान् कुर्यात् । त्वद्विधः कामवृत्तो हि राजा दुःशीलः पापमन्त्रितः स्वजनं राष्ट्रमात्मानं च हन्ति । दीप्तस्याग्नेर्ज्वालेव सा सीता धर्षयितुं न शक्या । परदारामर्शात्तु नान्यन्महत्पातकं परतरम् । अतः स्वदारनिरतो भव । रक्ष स्वकुलं राक्षसांश्च ।

तन्मारीचस्य युक्तं वाक्यं रावणस्तु न प्रतिजग्राह । कालप्रेरितश्चाब्रवीत्-- " मारीच ! निष्फलं वाक्यं किमर्थमेवं ब्रवीषि ? खरघातिनस्तस्य रामस्य प्रिया भार्या सीता मयाऽवश्यमेव हर्तव्या । मादृशस्य राज्ञः प्रतिकूलो भूत्वा न कोऽपि सुखं प्राप्नोति । यदि त्वं ममैतत्कार्यं स्वेच्छया न कर्तुमिच्छसि तर्हि बलात्करिष्यसि । "

ततस्ताटिकासुतो मारीचस्तथेत्युवाच । तत उभौ अपि राघवस्याश्रमं जग्मतुः। मारीचो मृगो भूत्वा रामस्याश्रमद्वारि विचचार । तं सौवर्णमृगं रुचिरं दृष्ट्वा प्रहृष्टा सीता भर्तारं रामं लक्ष्मणं चाब्रवीत्--" हे राम ! पश्य सौवर्णं मृगम् । अहो अस्य रूपम् । अहो लक्ष्मीः । स्वरसंपच्च शोभना ।

हे महाबाहो राम ! आनयैनं । एष नः क्रीडार्थं भविष्यति ।" इति ।

एवं प्रचोदितो रामो लक्ष्मणमुवाच । " हे लक्ष्मण ! इह त्वं सन्नद्धो भव ! रक्ष तावत् सीताम् । यावदहमानयामि मृगम् । अप्रमत्तेन त्वया भाव्यम्, प्रयत्नेन रक्षितव्या च त्वया सीता । " इति ।

इत्यादिश्य, उग्रपराक्रमो रामो चापं गृहीत्वा मृगमनुगतः । रामं अवेक्ष्यावेक्ष्य धावन्मृगो मुहूर्तादेव न दद्दृशे, मुहूर्द्दूरादेव प्रकाशते च । रामस्तु तमुद्दिश्य प्रदीप्तं ब्रह्मास्त्रं मुमोच । स शरः मृगरूपस्य मारीचस्य हृदयं बिभेद, तदा तत्रैव स न्यपतत् । प्राप्तकालं ज्ञात्वा तदा मरणसमये रामस्येवाक्रोशं चकार " हा सीते ! हा लक्ष्मण ! " इति । एवमाक्रोशं कृत्वा तत्रैव ममार च ।

तस्य तीव्रं शब्दं च श्रुत्वा रामो भयं आविवेश । तं शब्दं श्रुत्वा सीता कथं भवेत् ? कथं च लक्ष्मणः ? इति स मनसि विचारयामास ।

एवं मृगरूपं राक्षसं हत्वा त्वरमाण आश्रमाभिमुखं ससार ।

अत्र सीता रामस्यार्तं शब्दं श्रुत्वा लक्ष्मणमाह " गच्छ रामं जानीहि । आक्रन्दमानं भ्रातरं त्रातुमर्हसि । " इति ।

भ्रातुराज्ञां स्मृत्वा न जगाम लक्ष्मणः । जनकात्मजा ततः

क्रुद्धा तमुवाच "यस्त्वमस्यामवस्थायां नाभिगच्छसि भ्रातरं, नूनं मत्कृते लोभादेवात्र स्थितोऽसि ।"

एवं ब्रुवन्तीं वैदेहीं लक्ष्मणोऽब्रवीत्– "हे देवि ! ते भर्ता पन्नगासुरगन्धर्वदेवदानवराक्षसैरपि नैव जेतुं शक्यः । समरेऽवध्यो हि रामः । अतो मां नैवं वक्तुमर्हसि । अस्मिन्वने राघवं विना त्वां हातुं नोत्सहे। नान्यथा चिन्तयितुमर्हसि वैदेहि । महावने विविधवाचो राक्षसा एवं व्याहरन्त्येव ।" इति ।

तथापि क्रुद्धा सीता संरक्तलोचना भूत्वा परुषं वाक्यमब्रवीत् "अनार्य लक्ष्मण ! हे नृशंस ! कुलपांसन ! मन्ये राघवस्य महद्व्यसनं तुभ्यं रोचत एव । नैतच्चित्रं यत् त्वद्विधेषु सपत्नेषु प्रच्छन्नचारिषु नृशंसेषु पापं भवेत् । सुदुष्टस्त्वम् । मन्ये मम हेतोरेव त्वमेकं राममनुगतोऽसि । भरतेनापि वा प्रयुक्तो भवेः । हे सौमित्रे ! नैव तवोद्दिष्टं सिध्यति । कथं रामं भर्तारं प्राप्यान्यं जनं कामयेयम् । यदि इतो न गच्छसि रामरक्षणाय तर्हि त्वत्समक्षमेवात्र प्राणान्सन्त्यजामि ।" इति ।

एवं परुषमुक्तो जितेन्द्रियो लक्ष्मणः प्राञ्जलिराह ।– "नोत्सहे वक्तुमस्योत्तरम् । हे सीते! स्त्रीषु न चित्रमेव– द्वाक्यम् । स्वभाव एवैष नारीणाम् । भवती तु मम दैवतम् । इदं तु तव वाक्यं तप्तनाराचसंनिभं न सहे श्रोतुम् ।

उपशृण्वन्तु मे साक्षिणः सर्वेऽपि वनचराः, परुषं यथाऽहं वाक्यं त्वयोक्तोऽस्मि। स्त्रीत्वाद् दुष्टस्वभावेन मां भ्रातृवाक्ये व्यपस्थितमपि विशङ्कसे ! अस्तु ते स्वस्ति । गच्छामि यत्र काकुत्स्थः।" इत्युक्त्वा खिन्नो भूत्वा लक्ष्मणो निष्क्रान्तः।

वृक्षवल्लीषु प्रच्छन्नो रावणस्तदा क्षिप्रमेव परिव्राजकरूपधृक् काषायवस्त्रधारी वैदेहीमभिचक्राम । रामस्याश्रममागत्य तत्र सीतां दृष्ट्वा ब्रह्मघोषमुदीरयन् सीतामेवमब्रवीत्-" पीतकौशेय-वासिनि त्वं श्रीः शुभा वा लक्ष्मीरप्सरा वा काऽसि ? का त्वं ? देवता प्रतिभासि मे । कथं पुनस्त्वमिहागताऽसि ? राक्षसानामयं वासः । " इति ।

एवं रावणेन संपृष्टा सीता सर्वं प्रोवाच वृत्तम्। सा तमुवाच च -" आगमिष्यति मे भर्ता पुष्कलं वन्यमादाय । स त्वं नाम च गोत्रं च कुलं च समाचक्ष्व । एकाकी च त्वं अस्मिन्दण्डकारण्ये किं चरसि ? " इति ।

स रावणः प्रत्युवाच-- " सदेवासुरमानुषा लोका येन वित्रासिताः सोऽहं रावणो नाम राक्षसेश्वरः । लङ्का नाम महापुरी गिरिमूर्धनि सागरमध्येऽस्ति, तत्र गत्वा मेऽग्रमहिषी भव । " इति ।

अनादृत्य तस्य तद्वाक्यं कुपिता जनकात्मजा तं प्रत्युवाच-

" जितेन्द्रियमक्षोभ्यं राममेवानुव्रताऽस्मि । त्वं पुनर्जम्बूको भूत्वा सिंहीं मामिहेच्छसि? नाहं शक्या त्वया स्प्रष्टुमपि । "

श्रुत्वा तत्सीतावाक्यं दशग्रीवः स्वकीयं वपुः सुमहच्चकार सीतां पुनर्बभाषे च– " मन्ये, त्वया मम वीर्यपराक्रमौ न श्रुतौ । अहं भुजाभ्यां पृथिवीमुद्वहेयम्, समुद्रमपि संपूर्णमपिबेयम्, रणे मृत्युमपि हन्याम् । " इति ।

इत्युक्त्वा रावणः सीतां केशेषु हस्तेनैकेन जग्राह अपरेणोर्वोः । एवं गृहीता सा सीता भयार्ता विह्वलं चुक्रोश " हा राम, हा राम " इति। " हा लक्ष्मण, हा लक्ष्मण " इति च । एवं ह्रियमाणा सीता विललाप चैवम्- " हा राम ! न जानीषे मां राक्षसेन ह्रियमाणाम् । न पश्यसि मामधर्मेण ह्रियमाणाम् । कथं न शाधि पापमेवंविधं रावणम् । हन्त ! सकामा खलु कैकेयीदानीं संवृत्ता । हे राम ! पश्य माम्, रक्ष माम् । " इति

एवं विलपन्तीं सीतां गृहीत्वा रावणो लंकां प्रस्थितः ।

## शब्दार्थ

| | |
|---|---|
| उद्विग्न = ખિન્ન, દુઃખી. | ग्राम्य = ગ્રામીણ, હીન. |
| पालिता = પાલન કરાયલી. | आख्यातवती = કહ્યું |
| बोद्धव्यम् = જાણવા યોગ્ય. | नियताहार = નિશ્ચિત ભોજન |
| विन्हल = દુઃખી, પીડિત. | पथ्य = હિતકારક. |

अयुक्ताचार = દુરાચારી.
चपल = ચંચલ
पापमन्त्रित = પાપી સલાહ આપાયલો.
बलात् = જબરજસ્તીથી.
तथा = ઠીક છે.
लक्ष्मी = શોભા.
स्वरसपन् = શબ્દની શોભા.
काकुत्स्थ = રામ.
सन्नद्ध = તૈયાર, સિદ્ધ
त्वरमाण = ઉતાવળ કરવાવાળો
समार = ચાટ્યો
पन्नग = સાપ
जेतुं = જીતવા માટે.
हातुं = છોડવા માટે.
विविधवाचः = અનેક પ્રકારના શબ્દ કરવાવાળા
व्याहरन्ति = બોલે છે
परुष = કઠોર
नृशंस = ક્રૂર
कुलपांसन = કુળ દૂષિત કરનારો
नाराचः = બાણ
संनिभ = સરખો
वन्य = વનમાં ઉત્પન્ન થયેલો.

समासाः ।

१ रावणपालिता = रावणेन पालिता ।
२ कामभोगी = कामश्च भोगश्च ।
३ विशालाक्षी = विशाले अक्षिणी यस्याः सा ।
४ दृष्टपूर्वा = पूर्वं दृष्टा ।
५ रथशाला = रथानां शाला ।
६ जटामंडलधारिन् = जटायाः मंडलं जटामंडलं । तत् धारयतीति जटामंडलधारी ।

७ नियताहारः = नियतः आहारः यस्य ।

८ कर्णनासिकाछेदनं = कर्णश्च नासिका च कर्णनासिके। तयोः छेदनम् ।

९ प्रियवादिन् = प्रियं वदति इति ।

१० अयुक्ताचारः = न युक्तः अयुक्तः । अयुक्तः आचारः यस्य सः ।

११ महावीर्यगुणोपेतः = वीर्यं च गुणश्च वीर्यगुणौ । महान्तौ च तौ वीर्यगुणौ च महावीर्यगुणौ । ताभ्यां उपेतः ।

१२ उग्रपराक्रमः = उग्रः पराक्रमो यस्य ।

१३ संरक्तलोचना = संरक्ते लोचने यस्या ।

१४ काषायवस्त्रधारी = काषायं च तद्वस्त्रं च काषायवस्त्रं । तद् धारयतीति ।

१५ जितेन्द्रियः = जितानि इन्द्रियाणि येन ।

१६ अक्षोभ्यः = न क्षोभ्यः ।

१७ भयार्ता = भयेन आर्ता ।

१८ अधर्मः = न धर्मः ।

१९ सीतावाक्यं = सीताया वाक्यं ।

२० दशग्रीवः = दश ग्रीवा यस्य सः ।

—:o—o:—

आशीर्लिङ् ના પ્રત્યય

| | | | |
|---|---|---|---|
| १ प्र. पु. | ....यात् | ....यास्ताम् | ...यासुः। |
| २ म. पु. | ....याः | ...यास्तम् | ....यास्त। |
| ३ उ. पु. | ....यासम् | ....यास्व | ....यास्म। |

भू = ( થવું ) १ भूयात्, भूयास्ताम्, भूयासुः । २ भूयाः, भूयास्तम्, भूयास्त । ३ भूयासम्, भूयास्व, भूयास्म ।

धु = ( હલાવવું ) १ धूयात्, धूयास्ताम्, धूयासुः । २ धूयाः, धूयास्तम्, धूयास्त । ३ धूयासम्, धूयास्व, धूयास्म ।

स्मृ = ( સ્મરણ કરવું ) १ स्मर्यात्, स्मर्यास्ताम्, स्मर्यासुः । २ स्मर्याः, स्मर्यास्तम्, स्मर्यास्त । ३ स्मर्यासम्, स्मर्यास्व, स्मर्यास्म ।

दा = ( આપવું ) १ देयात्, देयास्ताम्, देयासुः । २ देयाः, देयास्तम्, देयास्त । ३ देयासम्, देयास्व, देयास्म ।

यज् = ( યજ્ઞ કરવો ) १ इज्यात्, इज्यास्ताम्, इज्यासुः । २ इज्याः, इज्यास्तम्, इज्यास्त । ३ इज्यासम्, इज्यास्व, इज्यास्म ।

પાઠકોએ અહીં જોયું હશે કે ગણ ભિન્નતાનો અહીં કોઇ વિશેષ સંબંધ નથી, ઘણું કરીને બધા ધાતુના રૂપ એક સરખાં થાય છે. હવે लिङ् ના આત્મનેપદી રૂપ જુઓ—

विधिलिङ् ( आत्मनेपदी )

| | | | |
|---|---|---|---|
| १ प्र. पु | ...ईत | ...ईयाताम् | ...ईरन् । |
| २ म. पु. | ..ईथाः | ...ईयाथाम् | ..ईध्वम् । |
| ३ उ. पु. | .. ईय | ...ईवहि | ...ईमहि । |

प्रथमगण ( अ )

नी = ( લઈ જવું ) १ नयेत, नयेयाताम्, नयेरन्। २ नयेथाः, नयेयाथाम्, नयेध्वम्। ३ नयेय, नयेवहि, नयेमहि ॥

चतुर्थगण ( य )

शुच् = ( શુદ્ધ થવું ) १ शुच्येत, शुच्येयाताम्, शुच्येरन्। २ शुच्येथाः, शुच्येयाथाम्, शुच्येध्वम्। ३ शुच्येय, शुच्येवहि, शुच्येमहि ॥

षष्ठगण ( अ )

क्षिप् = ( ફેંકવું ) १ क्षिपेत, क्षिपेयाताम्, क्षिपेरन्। २ क्षिपेथाः, क्षिपेयाथाम्, क्षिपेध्वम्, ३ क्षिपेय, क्षिपेवहि, क्षिपेमहि ॥

दशमगण ( अय )

तड् = ( મારવું ) १ ताडयेत, ताडयेयाताम्, ताडयेरन्। २ ताडयेथाः, ताडयेयाथाम्, ताडयेध्वम्। ३ ताडयेय, ताडयेवहि, ताडयेमहि ॥

द्वितीयगण ( ० )

आस् = ( બેસવું ) १ आसीत, आसीयाताम्, आसीरन्। २ आसीथाः, आसीयाथाम्, आसीध्वम्। ३ आसीय, आसीवहि, आसीमहि ॥

तृतीयगण ( द्वित्व )

दा = ( આપવું ) १ ददीत, ददीयाताम्, ददीरन्। २ ददीथाः, ददीयाथाम्, ददीध्वम्। ३ ददीय, ददीवहि, ददीमहि ॥

पंचमगण ( नु )

सु = ( રસ કાઢવો ) १ सुन्वीत, सुन्वीयाताम्, सुन्वीरन्। २

२ सुन्वीथा, सुन्वीयाथाम्, सुन्वीध्वम् । ३ सुन्वीय, सुन्वीवहि, सुन्वीमहि ॥

सप्तमगण ( न )

इन्ध् = ( બળવુ ) १ इन्धीत, इन्धीयाताम्, इन्धीरन् । २ इन्धीथा, इन्धीयाथाम्, इन्धीध्वम् । ३ इन्धीय, इन्धीवहि, इन्धीमहि ॥

अष्टमगण ( उ )

कृ = ( કરવુ ) १ कुर्वीत, कुर्वीयाताम्, कुर्वीरन् २ कुर्वीथाः, कुर्वीयाथाम्, कुर्वीध्वम् । ३ कुर्वीय, कुर्वीवहि, कुर्वीमहि ॥

नवमगण ( ना )

क्री = ( ખરીદવુ ) १ क्रीणीत, क्रीणीयाताम्, क्रीणीरन् । २ क्रीणीथा, क्रीणीयाथाम्, क्रीणीध्वम् । ३ क्रीणीय, क्रीणीवहि, क्रीणीमहि,

आशीर्लिङ् ( आत्मनेपदी प्रत्यय )

| | | | |
|---|---|---|---|
| १ प्र पु | सीष्ट | सीयास्ताम् | सीरन् । |
| २ म पु | सीष्ठाः | सीयास्थाम् | सीध्वम् । |
| ३ उ पु | सीय | सीवहि | सीमहि । |

धु = ( હલાવવુ ) १ धोषीष्ट, धोषीयास्ताम्, धोषीरन् । २ धोषीष्ठा, धोषीयास्थाम्, धोषीढ्वम्, । ३ धोषीय, धोषीवहि, धोषीमहि ॥

जन् = ( ઉત્પન્ન કરવુ ) जनिषीष्ट, जनिषीयास्ताम्, जनिषीरन् । २ जनिषीष्ठा, जनिषीयास्थाम्, जनिषीढ्वम् । ३ जनिषीय, जनिषीवहि, जनिषीमहि ॥

आशीर्लिङ् ના રૂપ બધા ધાતુઓના આ પ્રમાણે બને છે

## रामायणम् ।

एवं सान्त्वितो रामो वस्त्रान्तेनाश्रूणि प्रमार्जयत् । सुग्रीवमुवाच च- " कृतं कृतं त्वया मित्रस्य कर्तव्यम् । दुर्लभो हि त्वत्सदृशो बंधुः । विशेषत एवंविधेऽस्मिन्काले । किंतु त्वया महान्यत्नः कार्यः सीतायाः परिमार्गणे । " इति ।

ततो मधुरया गिरा प्रणयात्सुग्रीव उवाच– " भ्रात्रा हृतभार्योऽहं भयार्दितश्चरामि गिरिं ऋष्यमूकम्। मम भ्रातुर्वालिनो भयान्मां त्रातुमर्हसि । " इति ।

एवमुक्तस्तु धर्मवत्सलो रामः सुग्रीवं प्रहसन्निव प्रत्युवाच- " उपकार–लक्षणं मित्रं, अरिलक्षणं अपकारः । अतस्तव भार्यापहारिणं त्वद्भ्रातरमद्यैव हनिष्यामि । " इति ।

तच्छ्रुत्वा हृष्टः सुग्रीवो रामं प्रशशंस च । उवाच च रामम्– " राम ! वालिनः शौर्यं वीर्यं पौरुषं च श्रुत्वा यद्युक्तं तद्विधत्स्व । शृणु तस्य वीर्यं -- अनुदिते सूर्ये वाली अविश्रान्तः पश्चिमं समुद्रं क्रामति । शैलशिखराण्यप्यूर्ध्वं तरसोत्पातयति । एवंविधं बलिष्ठं कथं त्वं हन्तुं शक्ष्यसे ? "

लिङ् ને ઠેકાણે લેટ્

લિઙ્ લકાર આગળ બતાવ્યો છે. જેના વિધિલિઙ્ અને આશીર્લિઙ્ એવા બે ભેદ પાઠક જાણે જ છે. વેદમાં આ લિઙ્ લકારને ઠેકાણે ' લેટ્ ' નો પ્રયોગ થાય છે. અત્યાર સુધી ' લેટ્ '

રૂપ બનાવવાની રીતિ કહી નથી. કારણ કે 'लेट्' નો પ્રયોગ કેવલ વેદમાં જ આવે છે, બીજા કોઇ પણ ઠેકાણે આવતો નથી. વેદના શબ્દ નવા બનતા નથી. વેદમાં જે શબ્દો બનાવેલા છે તેનેજ જાણવાના છે. એટલા માટે એના રૂપ બનાવવાની કોઇ આવશ્યકતા નથી. 'लिङ्' ના અર્થમાં 'लेट्' થાય છે. એટલું જ પાઠક ધ્યાનમાં રાખે. પાઠક આ પાઠ વાંચે અને સમજવાનો પ્રયત્ન કરે.

—०=०—

## પાઠ ૫

### भविष्यकाल ( लृट् )

આ પુસ્તકના પ્રથમ પાઠમાં વર્તમાનકાલના પ્રત્યય આપ્યા છે, ધાતુ અને આ પ્રત્યયોના વચમાં 'स्य' લગાડવાથી ભવિષ્યકાલ બને છે. જેમકે—

भू = भव + ति = भवति ( वर्तमानकाल )
भू = भव् + स्य + ति = भविष्यति ( भविष्यकाल )

બધા ધાતુઓ માટે એ નિયમ સરખા જ છે, પરંતુ વિશેષતા એટલી જ છે કે કેટલાક ધાતુને 'स्य' ની પહેલાં 'इ' લાગે છે અને કેટલાકને લાગતી નથી. એના ઉદાહરણ આ છે—

कृ = १ करिष्यति, करिष्यतः, करिष्यन्ति । २ करिष्यसि, करिष्यथः, करिष्यथ । ३ करिष्यामि, करिष्यावः, करिष्यामः ॥

**સૂચના—** આત્મનેપદના પ્રત્યય લગાડવાથી ઉક્ત પ્રકારે આત્મનેપદી ધાતુઓના રૂપ બને છે જેમકે—.

कृ = १ करिष्यते, करिष्येते, करिष्यन्ते । २ करिष्यसे, करिष्येथे, करिष्यध्वे। ३ करिष्ये, करिष्यावहे, करिष्यामहे॥

જે ધાતુઓને 'इ' કાર લાગતો નથી તેના રૂપ નીચે પ્રમાણે થાય છે—

दृग् = १ द्रक्ष्यति, द्रक्ष्यतः, द्रक्ष्यन्ति । २ द्रक्ष्यसि, द्रक्ष्यथः, द्रक्ष्यथ । ३ द्रक्ष्यामि, द्रक्ष्याव, द्रक्ष्यामः ॥

सृज् = १ स्रक्ष्यति, स्रक्ष्यतः, स्रक्ष्यन्ति। २ स्रक्ष्यसि, स्रक्ष्यथः, स्रक्ष्यथ । ३ स्रक्ष्यामि, स्रक्ष्याव, स्रक्ष्यामः, ॥

આ ઉદાહરણો જોવાથી પાઠકોને વિશ્વાસ થયો હશે કે આ ભવિષ્યકાળના રૂપ બનાવવાં સહેલાં છે. કારણ કે સંપૂર્ણ ધાતુઓને માટે પ્રત્યય એકજ છે. તથાપિ પાઠકોની સરળતાને માટે અહીં પ્રત્યય આપું છું.

भविष्यकाल ( लृट् ) ના પ્રત્યય

પરસ્મૈપદ

| | | | |
|---|---|---|---|
| १ | ....स्यति | ...स्यतः | ....स्यन्ति |
| २ | ....स्यसि | .. स्यथः | ..स्यथ |
| ३ | ... स्यामि | ... स्यावः | ... स्यामः |

આત્મનેપદ

| | | | |
|---|---|---|---|
| १ | ...स्यते | ...स्येते | ...स्यन्ते |
| २ | ... स्यसे | .. स्येथे | ....स्यध्वे |
| ३ | ...स्ये | ...स्यावहे | ...स्यामहे |

इकार ના ' स्य ' ને ' ष्य ' થાય છે અને ' भविष्यति ' વિગેરે રૂપ થાય છે.

हेतुहेतुमद्भावार्थ । (लृङ्)

ચતુર્થ પાઠના પ્રારંભમાં આજ પુસ્તકમાં अनद्यतनभूत ( लङ् ) ના પ્રત્યય આપ્યા છે. એની આગળ ' स्य ' લગાડવાથી આ लृङ् લકારના રૂપ બને છે. સરળતાને માટે એના પ્રત્યય અહીં આપું છું. એમાં પણ लङ् ( अनद्यतनभूतની માફક ) ધાતુની આગળ ' अ ' લાગે છે. હવે એના પ્રત્યય જુઓ—

हेतुहेतुमद्भावार्थ

परस्मैपदी પ્રત્યય

| | | | |
|---|---|---|---|
| १ | ....स्यत् | ... स्यताम् | ... स्यन् |
| २ | ... स्यः | ... स्यतम् | ... स्यत |
| ३ | ... स्यम् | ....स्याव | ....स्याम |

आत्मनेपदी પ્રત્યય

| | | | |
|---|---|---|---|
| १ | ...स्यत | ...स्येताम् | ...स्यन्त |
| २ | ...स्यथाः | ....स्येथाम् | ....स्यध्वम् |
| ३ | ....स्ये | ....स्यावहि | ....स्यामहि |

હવે એનાં ઉદાહરણ જુઓ—

परस्मैपदी धातु

बुध् = १ अबोधिष्यत्, अबोधिष्यताम्, अबोधिष्यन् । २ अबोधिष्यः, अबोधिष्यतम्, अबोधिष्यत, । ३ अबोधिष्यम्, अबोधिष्याव, अबोधिष्याम ॥

नी = १ अनेष्यत्, अनेष्यताम्, अनेष्यन् । २ अनेष्यः,

अनेष्यतम्, अनेष्यत। ३ अनेष्यम्, अनेष्याव, अनेष्याम ॥

आत्मनेपदी धातु.

वृध् = १ अवर्धिष्यत, अवर्धिष्येताम्, अवर्धिष्यन्त ।
२ अवर्धिष्यथाः, अवार्धिष्येथाम्, अवार्धिष्यध्वम् ।
३ अवर्धिष्ये, अवर्धिष्यावहि, अवर्धिष्यामहि ॥

नी = १ अनेष्यत, अनेष्येताम्, अनेष्यन्त । २ अनेष्यथाः, अनेष्येथाम्, अनेष्यध्वम् । ३ अनेष्ये, अनेष्यावहि, अनेष्यामहि ॥

हेतुहेतुमद्भावार्थ ना रूपोनो उपयोग हेतु बतावनार वाक्योमां थाय छे. जेमके—"यदि स तत्रागमिष्यत् तर्हि एवं नाभविष्यत्।" (जो ते त्यां गयो होत तो आम न बनत) आवी रीतना वाक्योमां हेतुहेतुमद्भावनो प्रयोग थाय छे, हवे अनद्यतन-भविष्य ना रूप बनाववानो विधि जुओ—

अनद्यतन-भविष्य (लुट्)

अनद्यतन-भविष्य (लुट्) ना प्रत्यय नीचे प्रमाणे छे. बधा धातुओने माटे आज प्रत्यय छे.

परस्मैपदी

| | | | |
|---|---|---|---|
| १ | ....ता | ....तारौ | ....तारः |
| २ | ....तासि | ....तास्थः | ....तास्थ |
| ३ | ....तास्मि | ....तास्वः | ....तास्मः |

दा = (आपवुं) १ दाता, दातारौ, दातारः । २ दातासि, दातास्थः, दातास्थ । ३ दातास्मि, दातास्वः, दातास्मः ॥

भ्रम् = (भमवुं करवुं) १ भ्रमिता, भ्रमितारौ, भ्रमितारः । २ भ्रमितासि, भ्रमितास्थः, भ्रमितास्थ । ३ भ्रमितास्मि, भ्रमितास्वः, भ्रमितास्मः ॥

आत्मनेपदी

| | | | |
|---|---|---|---|
| १ | ...ता | ...तारौ | ...तारः |
| २ | ...तासे | ...तासाथे | ...ताध्वे |
| ३ | ...ताहे | ...तास्वहे | ...तास्महे |

આત્મને પદી ધાતુઓના આ પ્રત્યય લાગે છે, અને अनद्यतन-भविष्यकाल ના રૂપ બની જાય છે—

दा = ( આપવું ) १ दाता, दातारौ, दातारः । २ दातासे, दातासाथे, दाताध्वे । ३ दाताहे, दातास्वहे, दातास्महे ॥

આ પ્રત્યય લાગવા પહેલાં કેટલાક ધાતુઓને ' इ ' લાગે છે અને કેટલાક ધાતુને લાગતી નથી. અને કેટલાક ધાતુઓને વિકલ્પે ' इ ' લાગે છે.

लुभ् ( લોભ કરવો )

इकार થી ગ = १ लोभिता, लोभितारौ, लोभितारः । २ लोभितासि, लोभितास्थः, लोभितास्थ । ३ लोभितास्मि, लोभितास्वः, लोभितास्मः ॥

इकार વિનાના = १ लोब्धा, लोब्धारौ, लोब्धारः २ लोब्धासि, लोब्धास्थः, लोब्धास्थ । ३ लोब्धास्मि, लोब्धास्वः, लोब्धास्मः ॥

જે ધાતુઓને इकार (इट्) લાગે છે. તેમને ' सेट् ' ( स + इट् = इकारसहित ) કહે છે, જેમને નથી લાગતો તે ધાતુઓને ' अनिट् ( अन् + इट् = इकाररहित ) કહે છે, અને જે ધાતુઓને વિકલ્પે इकार લાગે તેમને ' वेट् ' ( वा + इट् = વિકલ્પે इट् થવાવાળો ) કહે છે. ધાતુ-सेट अनिट् અને वेट् પહેલેથી જ નિશ્ચિત્ છે, અને જે ધાતુ જેવા હોય તેવાં તેના રૂપ બને છે.

# પાઠ ૬

## पूर्णभूतकाल ( लिट् )

अनद्यतन-परोक्ष-भूतकाल ને ' लिट् ' કહે છે. જે ક્રિયા આજે નથી થઇ અને જે ક્રિયા, જોઇ પણ નથી તેને માટે આ लिट् લકાર-ના રૂપનો પ્રયોગ થાય છે. જેમકે- ' रामो राजा बभूव '- ( રામ રાજા થયા હતા. ) અર્થાત્ બોલનારાની નજર આગળ રામ રાજા થયા નથી, તે ઘણા વખત પહેલા થયા હતા. એ ' लिट् ' ના પ્રત્યય આ પ્રમાણે છે—

પરસ્મૈપદી ( लिट् )

| | | | |
|---|---|---|---|
| ૧ | ...अ | ...अतुः | ...उः |
| ૨ | ...थ | . अथुः | ...अ |
| ૩ | ...अ | . .व | ...म |

भू = ( થવું, હોવું ) १ बभूव, बभूवतु, बभूवु । २ बभूविथ, बभूवथुः, बभूव । ३ बभूव, बभूविव, बभूविम ॥

આ રૂપોમાં ધાતુના પ્રથમ અક્ષરનું દ્વિત્વ થાય છે અને તે અક્ષરનું મૃદુત્વ પણ થાય છે. જેમકે- ' भू+अ ' =' भ् भू+अ '= ' बुभू+अ ' = बभू+अ = बभूव । આ પ્રમાણે રૂપ બને છે. બીજા ઉદાહરણો જુઓ—

यु = ( મિશ્રણ કરવું ) -१ युयाव, युयुवतुः, युयुवु । २ युयुविथ, युयुवथु', युयुव । ३ युयाव, युयुविव, युयुविम ॥

रु = ( શબ્દ કરવો )- १ रुराव, रुरुवतुः, रुरुवु. । २ रुरुविथ, . रुरुवथुः, रुरुव । ३ रुराव, रुरुविव, रुरुविम ॥

३ ( સં. સ્વ. શિ ભા. ૯ )

वृ =( પસંદ કરવું )–१ ववार, वव्रतुः, वव्रुः । २ ववरिथ, वव्रथुः, वव्र । ३ ववार, वव्रुव, वव्रुम ॥

मुच् =( મુક્ત કરવું )– १ मुमोच, मुमुचतु, मुमुचुः । २ मुमोचिथ, मुमुचथुः, मुमुच । ३ मुमोच, मुमुचिव, मुमुचिम ॥

वच् =( બોલવું )– १ उवाच, ऊचतुः, ऊचु । २ उवचिथ, ऊचथु, ऊच । ३ उवाच, ऊचिव, ऊचिम ॥

प्रच्छ =( પૂછવું )–१ पप्रच्छ, पप्रच्छतुः, पप्रच्छु । २ पप्रच्छिथ, पप्रच्छथु, पप्रच्छ । ३ पप्रच्छ, पप्रच्छिव, पप्रच्छिम ॥

त्यज् =( છોડવું )– १ तत्याज, तत्यजतु, तत्यजुः । २ तत्यजिथ, तत्यजथुः, तत्यज । ३ तत्याज, तत्यजिव, तत्यजिम ॥

भुज् =( ભોજન કરવું )–१ बुभोज, बुभुजतु, बुभुजु.। २ बुभोजिथ, बुभुजथुः, बुभुज । ३ बुभोज, बुभुजिव, बुभुजिम ॥

युज् =( જોડવું ) – १ युयोज, युयुजतु, युयुजुः । २ युयोजिथ, युयुजथु, ययुज । ३ युयोज, युयुजिव, युयुजिम ॥

तप् = ( તપ કરવું ) – १ तताप, तेपतुः, तेपुः । २ ततपिथ, ततपिथुः, तेप । ३ तताप, तेपिव, तेपिम ॥

આ પ્રમાણે પરસ્મૈપદી ધાતુઓના રૂપ બને છે. હવે આત્મનેપદી ધાતુઓના રૂપ જુઓ—

## भूतकाल ( लिट् ) આત્મનેપદી

लिट् ના આત્મનેપદી પ્રત્યય નીચે પ્રમાણે છે—

| | | | |
|---|---|---|---|
| १ | ....ए | ...आते | ...इरे |
| २ | ....से | ...आथे | ...ध्वे |
| ३ | ....ए | ....वहे | ...महे |

આ પ્રત્યયો દ્વારા આત્મનેપદી ધાતુઓના રૂપ આ પ્રમાણે બને છે.

रु = ( શબ્દ કરવો ) –१ रुरुवे, रुरुवाते, रुरुविरे । २ रुरुविषे, रुरुवाथे, रुरुविध्वे । ३ रुरुवे, रुरुविवहे, रुरुविमहे ॥

शी = ( સુવું ) – १ शिश्ये शिश्याते, शिश्यिरे । २ शिश्यिषे, शिश्याथे, शिश्यिध्वे । ३ शिश्ये, शिश्यिवहे, शिश्यिमहे ॥

वृ = ( પસંદ કરવું ) - १ वव्रे, वव्राते, वव्रिरे । २ वव्रुषे, वव्राथे, ववृड्ढ्वे । ३ वव्रे, वव्रृवहे, वव्रृमहे ॥

पच् = ( રાંધવું ) १ पेचे, पेचाते, पेचिरे । २ पेचिषे, पेचाथे, पेचिध्वे । ३ पेचे, पेचिवहे, पेचिमहे ॥

भज् = ( સેવા કરવી )- १ भेजे, भेजाते, भेजिरे । २ भेजिषे, भेजाथे, भेजिध्वे । ३ भेजे, भेजिवहे, भेजिमहे ॥

यज् = ( યજ્ઞ કરવુ ) - १ ईजे, ईजाते, ईजिरे । २ ईजिषे, ईजाथे, ईजिध्वे । ३ ईजे, ईजिवहे, ईजिमहे ॥

विद् = ( વિચાર કરવો )– १ विविदे विविदाते, विविदिरे । २ विविदिषे, विविदाथे, विविदिध्वे । ३ विविदे, विविदिवहे, विविदिमहे ॥

बुध् = ( જાણવુ ) - १ बुबुधे, बुबुधाते, बुबुधिरे । २ बुबुधिषे, बुबुधाथे, बुबुधिध्वे । ३ बुबुधे, बुबुधिवहे, बुबुधिमहे ॥

मन् = ( વિચાર કરવો )–१ मेने, मेनाते, मेनिरे । २ मेनिषे, मेनाथे, मेनिध्वे । ३ मेने, मेनिवहे, मेनिमहे ॥

लभ् = ( લાભ કરવો )– १ लेभे, लेभाते, लेभिरे । २ लेभिषे, लेभाथे, लेभिध्वे । ३ लेभे, लेभिवहे, लेभिमहे ॥

कृष् = ( હળ ચલાવવુ ) १ चकृषे, चकृषाते, चकृषिरे । २ चकृषिषे,

चकृपाथे, चकृपिध्वे । ३ चकृपे, चकृपिवहे, चकृपिमहे ॥

घु = ( હુલાવવું )- १ दुघुवे, दुघुवाते, दुघुविरे । २ दुघुविषे, दुघुवाथे, दुघुविध्वे । ३ दुघुवे, दुघुविवहे, दुघुविमहे ॥

## कृ-भू-अस् ધાતુઓનો પ્રયોગ.

ધાતુને ' आम् ' પ્રત્યય લગાડી તેની સાથે ' कृ, भू, अस् ' આ ત્રણ ધાતુઓના लिट् ના રૂપ લગાડવાથી પણ लिट् ના રૂપ બનાવવાની એક રીતિ છે. कृ, भू, अस् ધાતુના પરસ્મૈપદી અને આત્મનેપદી રૂપ નીચે પ્રમાણે થાય છે—

कृ =( પરસ્મૈ० )-१ चकार, चक्रतुः, चक्रुः । २ चकर्थ, चक्रथुः, चक्र । ३ चकार, चकृव, चकृम ।

कृ =( આત્મને० )- १ चक्रे, चक्राते, चक्रिरे । २ चकृषे, चक्राथे, चकृढ्वे । ३ चक्रे, चकृवहे, चकृमहे ॥

भू = ( પરસ્મૈ० ) - १ बभूव, बभूवतुः, बभूवुः । २ बभूविथ, बभूवथुः, बभूव । ३ बभूव, बभूविव, बभूविम ॥

अस् = ( પરસ્મૈ० )- १ आस, आसतुः, आसुः । २ आसिथ, आसथुः, आस । ३ आस, आसिव, आसिम ॥

આ રૂપ નીચે પ્રમાણે ધાતુઓની સાથે લગાડવાથી लिट्ना રૂપ બને છે—

### कास् ( ખાંસી કરવી )

१ कासाञ्चक्रे, कासाञ्चक्राते, कासांचक्रिरे ।

१ कासामास, कासामासतु, कासामासु ।

१ कासांबभूव, कासांबभूवतुः, कासांबभूवुः ।

कथ् ( કહેવું )

१ कथयांचकार, कथयांचक्रतुः, कथयांचक्रुः ।
१ कथयांचक्रे, कथयांचक्राते, कथयांचक्रिरे ।
१ कथयामास, कथयामासतुः, कथयामासुः ।
१ कथयांबभूव, कथयांबभूवतुः, कथयांबभूवुः ।

અહીં પ્રથમ પુરુષના રૂપ બતાવ્યાં છે, બીજા મધ્યમ અને ઉત્તમ પુરુષનાં રૂપ આ પ્રમાણે પૂર્વોક્ત રૂપ લગાડીને પાઠક બનાવી શકે છે.

---

## પાઠ ૭

भूतकाल ( लुङ् )

આ ભૂતકાલના પ્રત્યય ઘણાં પ્રકારના છે, તેમાં પ્રથમ વિભાગના પ્રત્યય આ છે.

परस्मैपदी ।

| | | | |
|---|---|---|---|
| १ | .... त् | ... ताम् | .... उस् |
| २ | ... स् (:) | ... तम् | ... त |
| ३ | ... अम् | .... व | .... म |

આ પ્રત્યય ઘણું કરીને અનદ્યતનભૂત लङ् ના પ્રત્યય સમાન જ છે ફક્ત ભેદ એટલો છે કે ' अन् ' પ્રત્યયની જગાએ અહીં ' उस् ' પ્રત્યય થાય છે, એના રૂપ આ પ્રમાણે છે—

स्था=(ઉભા રહેવું)-१ अस्थात्, अस्थाताम्, अस्थुः। २ अस्थाः, अस्थातम्, अस्थात। ३ अस्थाम्, अस्थाव, अस्थाम॥

दा=(આપવું) १ अदात्, अदाताम्, अदुः। २ अदाः, अदातम्, अदात। ३ अदाम्, अदाव, अदाम॥

पा =(પીવું)- १ अपात्, अपाताम्, अपुः। २ अपाः, अपातम्, अपात। ३ अपाम्, अपाव, अपाम॥

જે ધાતુઓના અંતમાં આ ન હોય એ ધાતુઓના રૂપમાં 'लङ्'ની માફક 'अन्' પ્રત્યય 'उस्' ને ઠેકાણે થાય છે—

भू =(થવું, હોવું)- १ अभूत्, अभूताम्, अभूवन्। २ अभूः, अभूतम्, अभूत। ३ अभूवम्, अभूव, अभूम॥

પાઠકોને આ વાત ધ્યાનમાં આવી હશે કે, આ ભૂતકાલમાં 'भू'નો 'भव्' થતો નથી અને ગુણ પણ થતો નથી. તેથી 'अभूत्' રૂપ બન્યું છે. જ્યારે પૂર્વોક્ત 'लङ्' નું રૂપ 'अभवत्' થાય છે. 'लङ्' અને 'लुङ्' ના રૂપમાં આ જ ભેદ છે—

પરસ્મૈપદી પ્રત્યય- १ ....त्, ...ताम्, ...न्। २ ...स्, ....तम्, ....त। ३ ...म्, ....व, ....म।

शक् (સમર્થ થવું)

१ अशकन्, अशकताम्, अशकन्। २ अशकः, अशकतम्, अशकत। ३ अशकम्, अशकाव, अशकाम॥

वच् (બોલવું)

१ अवोचत्, अवोचताम्, अवोचन्। २ अवोचः, अवोचतम्, अवोचत। ३ अवोचम्, अवोचाव, अवोचाम॥

सिच् ( છાંટવું )

१ असिचत्, असिचताम्, असिचन् । २ असिचः, असिचतम्, असिचत । ३ असिचम्, असिचाव, असिचाम ॥

આત્મનેપદી પ્રત્યય– १ ....त, ....इताम्, ....न्त । २ ... थाः, ... इथाम्, ... ध्वम् । ३ ...इ, ...वहि, ...महि ॥

लिप् ( લીપવું )

१ अलिपत, अलिपेताम्, अलिपन्त । २ अलिपथाः, अलिपेथाम्, अलिपध्वम् । ३ अलिपे, अलिपावहि, अलिपामहि ॥

આ પ્રમાણે બીજા ધાતુઓના પણ રૂપ થાય છે. પાઠક આ રીતે બીજા ધાતુઓના રૂપ બનાવી શકશે. એના બીજા પણ કેટલાક પ્રકાર છે પરંતુ તે બધાને જાણવાનું કોઇ વિશેષ પ્રયોજન નથી.

णिजन्त ( प्रयोजक ) ક્રિયા.

ક્રિયાના બે ભેદ છે. એક પોતે કરવાની ક્રિયા અને બીજી બીજા પાસે કરાવવાની ક્રિયા. જેમકે–કરવું, કરાવવું. પહેલી ક્રિયા પોતે કરવાની છે. અને બીજી બીજા પાસે કરાવવાની છે. પહેલી ક્રિયાના રૂપ અત્યારસુધીમાં આપી દીધાં છે. હવે બીજી ક્રિયાના રૂપ આપવામાં આવે છે—

| ધાતુ | અર્થ | णिजन्त ( प्रयोजक ) रूप |
|---|---|---|
| १ स्फुर- | ( ફુરકવું ) | स्फारयति, स्फारयते । |
| २ पा- | ( રક્ષણ કરવું ) | पालयति, पालयते । |
| ३ दा- | ( આપવું ) | दापयति |

| | | | |
|---|---|---|---|
| ૪ रुह्- | ( વધવું ) | रोहयति | ते । |
| ૫ दुष्- | ( દૂષિત કરવું ) | दूषयति | ते । |
| ૬ प्री- | ( પ્રીતિ કરવી ) | प्रीणयति | ते । |
| ૭ व्यथ्- | ( દુઃખી કરવું ) | व्यथयति | ते । |
| ૮ प्रथ्- | ( પ્રસિદ્ધ થવું ) | प्रथयति | ते । |
| ૯ नट्- | ( નાચવું ) | नटयति, नाटयति | ते । |
| ૧૦ ज्वल्- | ( બળવું ) | ज्वलयति, ज्वालयति | ते । |
| ૧૧ चल्- | ( ચાલવું ) | चलयति, चालयति | ते । |
| ૧૨ ध्वन्- | ( શબ્દ કરવો ) | ध्वनयति, ध्वानयति | ते । |
| ૧૩ क्रम्- | ( આક્રમણ કરવું ) | क्रमयति । | ते । |
| ૧૪ नम्- | ( નમ્ર થવું ) | नमयति, नामयति | ते । |
| ૧૫ स्ना- | ( સ્નાન કરવું ) | स्नपयति, स्नापयति | ते । |
| ૧૬ कम् | ( ઇચ્છા કરવી ) | कामयति | ते । |
| ૧૭ शम् | ( શાંત કરવું ) | शामयति | ते । |
| ૧૮ यम्- | ( કાબુમાં રાખવું ) | यामयति | ते । |

આ રૂપ પ્રયોજક ક્રિયાના વર્તમાન કાલના છે. એના બીજા લકારોના રૂપ પૂર્વના પાઠોમાં બતાવેલી રીતિ પ્રમાણે જ થાય છે. એના અર્થ આ પ્રમાણે થાય છે—

| | | |
|---|---|---|
| दा- | ददाति | ( આપે છે ) |
| | दापयति | ( અપાવે છે ) |
| व्यथ्- | व्यथते | ( દુઃખી થાય છે ) |
| | व्यथयति | ( દુઃખ દે છે ) |
| नट्- | नटति | ( નાચે છે ) |
| | नटयति | ( નચાવે છે ) |

| | | |
|---|---|---|
| चल | चलति | ( ચાલે છે ) |
| | चलयति | ( ચલાવે છે ) |
| नम्- | नमति | ( નમ્ર થાય છે ) |
| | नमयति | ( નમાવે છે ) |
| स्ना- | स्नाति | ( સ્નાન કરે છે ) |
| | स्नापयति | ( સ્નાન કરાવે છે ) |

આ પ્રમાણે એમના અર્થ થાય છે આ પ્રયોજક ક્રિયા ઘણી ઉપયોગી છે—

श्लोकपाठः ।

एवं बहुविधैर्वाक्यैर्याच्यमानस्तया नृपः ।
*नाश्रद्दधच्छाल्वपतिः कन्यायां भरतर्षभ* ॥ २० ॥
ततः सा मन्युनाऽऽविष्टा ज्येष्ठा काशिपतेः सुता ।
अब्रवीत्साऽश्रुनयना बाष्पविप्लुतया गिरा ॥ २१ ॥
( म० भा० उद्योग० अ० १७५ )

' हे भरतर्षभ ! एवं तया बहुविधैः वाक्यैः याच्यमानः *नृपः शाल्वपतिः तस्यां कन्यायां न अश्रद्दधत्* ॥ ततः सा काशिपतेः ज्येष्ठा सुता मन्युना आविष्टा साश्रुनयना बाष्पविप्लुतया गिरा अब्रवीत् ॥

## પાઠ ૮

### सन्नन्त-क्रिया ।

गम् ( જવું ) = गच्छति ( જાય છે ).

जिगमिषति ( જવાની ઇચ્છા કરે છે ), આ સન્નન્તક્રિયા છે.

पठ् ( ભણવું )= पठति ( ભણે છે ).

पिपठिषति ( ભણવાની ઇચ્છા કરે છે ). આ સન્નન્ત ક્રિયા છે.

આ सन्नन्त-क्रिया ના ઉદાહરણ છે. કોઈ કામ કરવાની ઇચ્છા કરવાનો ભાવ બતાવવા માટે આ ક્રિયાનો પ્રયોગ થાય છે. આ ક્રિયામાં ધાતુનું દ્વિત્વ થાય છે, અને પછી ' स ' પ્રત્યય લાગે છે. જેમકે—

भू = भु भू = बुभू+ स बुभूष + ति = बुभूषति— ( થવાની ઇચ્છા કરે છે ) આ પ્રમાણે આ ક્રિયાના રૂપ બને છે.

| | | | |
|---|---|---|---|
| १ भू | ( થવું ) | .. | बुभूषति । |
| २ पठ् | ( ભણવું ) | .. | पिपठिषति । |
| ३ मुष् | ( ચોરવું ) | ... | मुमुषिषति । |
| ४ भिद् | ( ભેદ કરવો ) | .. | बिभित्सति । |
| ५ हन् | ( મારવું ) | ... | जिघांसति । |
| ६ गम् | ( જવું ) | . | जिगमिषति । |
| ७ लिख् | ( લખવું ) | ... | लिलिखिषति । |
| ८ ज्ञा | ( જાણવું ) | ... | जिज्ञासते । |
| ९ मान् | ( માનવું ) | ... | मीमांसते । |
| १० स्था | ( ઉભા રહેવું ) | . | तिष्ठासति । |
| ११ रक्ष् | ( રક્ષણ કરવું ) | .. | रिरक्षिषति । |

१२ कृ ( કરવું ) ... चिकीर्षति ।
१३ लप् (ઇચ્છા કરવી).... लिलयिषति ।
१४ वद् ( બોલવું ) ... विवदिषति ।

એના અર્થ કેવા થાય છે, એ વાત પહેલાં બતાવીજ છે. એટલે તે ફરી કહેવું જરૂરનું નથી. અહીં ક્રિયાપદ વિચાર સમાપ્ત થાય છે. હવે ઉપસર્ગની સાથે ધાતુઓનો પ્રયોગ કરવાની વિધિ બતાવવાની છે—

ઉપસર્ગ અને ધાતુ.

ઉપસર્ગ ધાતુની પહેલાં લાગે છે, અને ધાતુનો અર્થ પણ બદલાઇ જાય છે. જેમકે—

गम्- ( જવું ) गच्छति, अगच्छत्, गमिष्यति, जगाम ।

એને ઉપસર્ગ લગાડવાથી નીચે પ્રમાણે ક્રિયાપદ થાય છે.—

१ प्रगच्छति, संगच्छति, उद्गच्छति, अनुगच्छति ।

२ प्रागच्छत्, समगच्छत्, उदगच्छत्, अन्वगच्छत् ।
( प्र+अगच्छत्, सम्+अगच्छत्, उत्+अगच्छत्, अनु+अगच्छत् । )

३ प्रगमिष्यति, संगमिष्यति, उद्गमिष्यति, अनुगमिष्यति ।

४ प्रजगाम, संजगाम, उज्जगाम, अनुजगाम ।

દરેક લકારના રૂપ બનાવ્યા પછી તેને યોગ્ય ઉપસર્ગ પછી મૂકવામાં આવે છે. અર્થાત્ 'संगम्' ધાતુનું लङ् નું રૂપ 'समगच्छत्' થાય છે કારણ કે लङ् નું રૂપ 'अगच्छत्' છે અને એની પહેલાં 'सम्' ઉપસર્ગ મૂકવાથી 'सम् + अगच्छत् = समगच्छत्' બને છે. આ પ્રમાણે બીજા ધાતુઓના રૂપ બનાવવાનો પ્રયત્ન

કરવો જોઈએ. પાઠકોની સુગમતાને માટે અહીં થોડાં ઉદાહરણ આપવામાં આવે છે—

१ गम् (જવું)

१ अधि+गम् = (પ્રાપ્ત કરવું) = अधिगच्छति, अध्यगच्छत्, अधिगमिष्यति ।

२ अनु+गम् = (પાછળ જવું) = अनुगच्छति, अन्वगच्छत्, अनुगमिष्यति ।

३ अव+गम् = (જાણવું) = अवगच्छति, अवागच्छत्, अवगमिष्यति ।

४ आ+गम् = (આવવું) = आगच्छति, आगच्छत्, आगमिष्यति ।

५ उप+गम् = (પાસે જવું) = उपगच्छति, उपागच्छत्, उपगमिष्यति ।

६ नि गम् = (જવું) = निगच्छति, न्यगच्छत् निगमिष्यति ।

७ निर्गम् = (બહાર જવું) = निर्गच्छति, निरगच्छत्, निर्गमिष्यति ।

८ विगम् = (ચાલી જવું) = विगच्छति, व्यगच्छत्, विगमिष्यति ।

९ संगम् = (મળવું) = संगच्छति, समगच्छत्, संगमिष्यति ।

આ પ્રમાણે ધાતુઓને જુદા જુદા ઉપસર્ગ લગાડવાથી જુદાજુદા ધાતુઓ બને છે. કોઇ કોઈ વાર એકથી વધારે ઉપસર્ગ પણ લાગે છે. હવે બીજા ધાતુના ઉદાહરણ જુઓ—

उपवस् = (ઉપવાસ કરવો) = उपवसति, उपावसत्, उपवसिष्यति ।

निर्मुच् = ( છોડવું ) = निर्मुञ्चति, निरमुञ्चत्, निर्मोक्ष्यति।
निर्या = ( જવું ) = निर्याति, निरयात्, निर्यास्यति।
प्रदह् = ( બાળવું ) प्रदहति, प्रादहत्, प्रधक्ष्यति।
प्रदुष् = ( દોષયુક્ત બનવું ) = प्रदुष्यति, प्रादुष्यत्, प्रदोक्ष्यति।
विक्रम् = ( પરાક્રમ કરવું ) = विक्रमति, व्यक्रमत्, विक्रमिष्यति।
विगर्ह् = ( નિંદા કરવી ) = विगर्हति, व्यगर्हत्, विगर्हिष्यति।
विचल् = ( હાલવું ) = विचलति, व्यचलत्, विचलिष्यति।
वितॄ = ( પાર થવું, આપવું ) = वितरति, व्यतरत्, वितरिष्यति।
संभू = ( જન્મ લેવો ) = संभवति, समभवत्, संभविष्यति।
संभाष् = ( સંભાષણ કરવું ) = संभाषते, समभाषत, संभाषिष्यते।

આ પ્રમાણે બીજા ધાતુઓના ઉપસર્ગપૂર્વક રૂપ બને છે તે જાણવા યોગ્ય છે. એના પ્રયોગ સંસ્કૃતભાષામાં અનેક ઠેકાણે જોવામાં આવે છે. એટલે ઉપસર્ગ પૂર્વક ધાતુઓનાં રૂપનું મહત્ત્વ વાચક પોતે જાણી શકશે. ઉદાહરણ તરીકે નીચે આપેલા શ્લોક જુઓ—

आत्मवीर्यं समाश्रित्य भृत्यवीर्यं च कौरव।
आह्वयस्व रणे पार्थान्सर्वथा क्षत्रियो भव ॥ ५४ ॥
परवीर्यं समाश्रित्य यः समाह्वयते परान्।
अशक्तः स्वयमादातुमेतदेव नपुंसकम् ॥ ५५ ॥
( म० भा० उद्योग० अ० १६२ )

" પોતાના વીર્યનો અને નોકરોના પરાક્રમનો આશ્રય કરીને હે કૌરવ! યુદ્ધમાં (पार्थान्) પાંડવોને આહ્વાન કર, બધી રીતે ક્ષત્રિય બન.

બીજાની શક્તિનો આશ્રય કરીને જે શત્રુઓને યુદ્ધ માટે આહ્વાન કરે, છે અને પોતે યુદ્ધનો ભાર ઉઠાવવામાં અશક્ત હોય તે નપુંસક છે.

આ શ્લોકોમાં—

समाश्रित्य- ( सम्+आ+श्रि ),
आह्वयस्व- ( आ+ह्वे ),
समाह्वयते- ( सं+आ+ह्वे ),
आदातुं - ( आ+दा ),

આ બધા રૂપ ઉપસર્ગ પૂર્વક ધાતુઓનાં છે. વાચક આ પ્રમાણે જાણી લે.

---

## પાઠ ૯

### धातुसाधित रूप ।

ધાતુની સાથે પ્રત્યય જોડવાથી કેટલાક આવશ્યક રૂપ તૈયાર થાય છે અને એનો વારંવાર ઉપયોગ થાય છે, માટે આ પાઠમાં એ પ્રત્યયોનો વિચાર કરવાનો છે.

#### ' तुम् ' પ્રત્યય

ક્રિયા ' કરવા માટે ' એ અર્થમાં આ પ્રત્યય લાગે છે. જેમકે—

| | | |
|---|---|---|
| कृ ( કરવું ) | - कर्तुम् । | ( કરવા માટે ) |
| गम् ( જવું ) | - गन्तुम् । | ( જવા માટે ) |
| लिख् ( લખવું ) | - लेखितुम् । | ( લખવા માટે ) |
| सेव् ( સેવા કરવી ) | - सेवितुम् । | ( સેવા કરવા માટે ) |

વારંવાર સંસ્કૃત ભાષામાં એ રૂપોનો પ્રયોગ થાય છે, અને એ રૂપ બનાવવાં ઘણાં સહેલાં છે. એ માટે અહીં કેટલાંક રૂપ આપવામાં આવે છે—

| | |
|---|---|
| अंक् (ચિન્હ કરવું)=अंकयितुम् | अश् (ભોજન કરવું)=अशितुम् |
| अत् (જવું) = अतितुम् | आप् (વ્યાપ્ત થવું)= आप्तुम् |
| अद् (ખાવું)= अत्तुम् | कथ् (કહેવું)= कथयितुम् |
| अन् (જીવન ધારણ કરવું)= अनितुम् | कम्प् (હલાવું)= कम्पितुम् |
| | कृष् (ખેડવું)= कर्ष्टुम् |
| अर्च् (પૂજા કરવી) = अर्चितुम् (१ गण)। अर्चयितुम् (१० गण) | क्रम् (ચાલવું) = क्रमितुम् |
| | गण् (ગણવું)= गणयितुम् |
| | छिद् (કાટવું) = छेत्तुम् |
| अर्थ् (માંગવું)= अर्थयितुम् | जी (જય મેળવવો)= जेतुम् |
| अव् (રક્ષણ કરવું)= अवितुम् | तड् (તાડન કરવું, મારવું) = ताडयितुम् |

આ પ્રમાણે બીજા ધાતુઓના 'तुम्' પ્રત્યયાન્ત ધાતુસાધિત રૂપ બને છે. હવે વાંચક એને ઓળખી શકશે.

'त्वा' પ્રત્યય

'...કરીને' એ અર્થમાં સંસ્કૃત ધાતુઓને 'त्वा' પ્રત્યય લગાડી રૂપ બને છે, જેમકે—

गम् = गत्वा = (જઈને)
पा = पीत्वा = (પીને)
भुज् = भुक्त्वा = (ભોજન કરીને)
नम् = नत्वा = (નમીને)
तृप् = तृपित्वा = (તૃપ્ત થઈને)

આ રીતે આ પ્રત્યય લગાડવાથી રૂપ બને છે. એનો પણ સંસ્કૃત ભાષામાં ઘણો ઉપયોગ થાય છે. હવે એના કેટલાંક ઉદાહરણ જુઓ—

| | |
|---|---|
| त्रुट् ( તુટવું )- त्रुटित्वा | धृ ( ધારણ કરવું ) धृत्वा |
| त्वर् (ઉતાવળ કરવી)- त्वरित्वा | नट् ( નાચવું )- नटित्वा |
| दण्ड् (શિક્ષા કરવી)-दण्डयित्वा | नश् (નાશ થવું )-नाशित्वा<br>नष्ट्वा |
| दम् ( દમન કરવું )- दमित्वा | |
| दंश् ( કરડવું ) - दंष्ट्वा | निन्द् ( નિંદા કરવી ) निन्दित्वा |
| दा ( આપવું )- दत्त्वा | नृत् ( નાચવું )- नर्तित्वा |
| दुह् ( દોહવું )- दुग्ध्वा | पच् ( રાંધવું )- पक्त्वा |
| द्विष् (દ્વેષ કરવો )- द्विष्ट्वा | पठ् ( ભણવું )- पठित्वा |
| धाव् ( દોડવું ) - धावित्वा | पा ( રક્ષણ કરવું )- पात्वा |
| धा ( ધારણ કરવું )- हित्वा | पुष् ( પુષ્ટ કરવું )- पुष्ट्वा |
| धु ( હાલવું )- धुत्वा | पूज् ( પૂજા કરવી ) पूजयित्वा |

આ પ્રમાણે ' त्वा ' પ્રત્યય લગાડીને રૂપ બનાવવામાં આવે છે.

## ' य ' પ્રત્યય

ધાતુની પહેલાં ઉપસર્ગ હોય તો ' त्वा ' પ્રત્યયને ઠેકાણે ' य ' પ્રત્યય લાગે છે, એનો પણ એજ અર્થ છે. એના ઉદાહરણ જુઓ—

| | | | |
|---|---|---|---|
| अधि - इ | = | अधीत्य | ( અભ્યાસ કરીને ) |
| नि - यम् | = | नियम्य | ( નિયમન કરીને ) |
| प्र - णम् | = | प्रणम्य | ( પ્રણામ કરીને ) |
| वि - तन् | = | वितन्य | ( ફેલાવીને ) |
| आ - दा | = | आदाय | ( લઈને ) |

वि - धा = विधाय ( કરીને )
प्र - हा = प्रहाय ( છોડીને )
आ - क्रम् = आक्रम्य ( આક્રમણ કરીને )
सं - आ-भाष् = समाभाष्य ( સંભાષણ કરીને )
सं - चि = संचित्य ( એકઠું કરીને )
स - चिन्त् = संचिन्त्य ( વિચાર કરીને )
प्र - जल्प् = प्रजल्प्य ( બડબડ કરીને )
वि - जि = विजित्य ( વિજય કરીને )
वि - ज्ञा = विज्ञाय ( જાણીને )

આ પ્રમાણે ઉપસર્ગ પૂર્વક ધાતુઓના રૂપ થાય છે. સંસ્કૃતમાં એનો ઘણો પ્રયોગ થાય છે. માટે પાઠક એનો ઠીક અભ્યાસ કરે.

## कृत्य-प्रक्रिया

" तव्य " અને " अनीय " એ બે પ્રત્યય ધાતુઓને લાગે ત્યારે ' યોગ્ય ' અર્થ બતાવે છે જેમકે—

कृ-कर्तव्यम्, करणीयम् ( કરવા યોગ્ય )
भिद्-भेत्तव्यम्, भेदनीयम् ( ભેદવા યોગ્ય )
पच्-पक्तव्यम्, पचनीयम् ( રાંધવા યોગ્ય )
निन्द्-निन्दितव्यम्, निन्दनीयम् ( નિંદા કરવા યોગ્ય )
कथ्-कथयितव्यम्, कथनीयम् ( કહેવા યોગ્ય )
चि-चेतव्यम्, चयनीम् ( એકઠું કરવા યોગ્ય )
मृज्-मार्ष्टव्यम्, मार्जनीयम् ( શુદ્ધ કરવા યોગ્ય )

જે ધાતુઓને છેવટે સ્વર હોય છે તેમને ' य ' પ્રત્યય આજ અર્થમા લાગે છે. જેમકે—

जि –जेयं ( જીતવા યોગ્ય )
चि –चेयं ( એકઠું કરવા યોગ્ય )
दा –देयं ( આપવા યોગ્ય )
धा –धेयं ( ધારણ કરવા યોગ્ય )
गै –गेयं ( ગાવા યોગ્ય )

કેટલાક વ્યંજનાન્ત ધાતુઓને પણ આ ' य ' પ્રત્યય લાગે છે.
જેમકે—

जन् –जन्यं ( જન્મ આપવા યોગ્ય )
आलभ् –आलभ्यं ( પ્રાપ્ત કરવા યોગ્ય )
चर् –चर्यं ( કરવા યોગ્ય )
नियम –नियम्यं ( નિયમમાં રાખવા યોગ્ય )

આ પ્રમાણે બીજા ધાતુઓને પણ આ પ્રત્યયો લાગે છે.

—:*:—

## પાઠ ૧૦

### रामायणम् ।

तथा ब्रुवाणं सुग्रीवं लक्ष्मणः प्रहसन्निवाब्रवीत्– " कस्मिन् कर्मणि कृते सति वालिनो वधं श्रद्दध्याः ? "

सुग्रीव उवाच– " इमान् सप्त तालवृक्षान् पुरा वाली विव्याध । एवं यः कर्तुं शक्नोति स एव वालिनो वधं कर्तुं समर्थो भविष्यति । "

एतत्सुग्रीवस्य भाषणं श्रुत्वा महातेजा रामस्तस्य प्रत्ययार्थमेकमेव शरं चिक्षेप, स शरः सप्त तालान् भित्त्वा भूमिं प्रविवेश। रामस्य शरवेगेन सुग्रीवः परं विस्मयं गतः कृताञ्जली रामायोवाच--"पुरुषर्षभ! समरे सर्वानपि सुरान्हन्तुं त्वं समर्थोऽसि किंपुनर्वालिनम्? येन त्वया सप्त तालवृक्षा गिरिर्भूमिश्च एकेनैव बाणेन विदारितास्तेन त्वया सह को रणे स्थाता? अतस्त्वं वालिनं जहीति।"

ततः सुग्रीवं रामः प्रत्युवाच--"गच्छामेदानीं किष्किन्धाम्। अग्रतो गत्वा वालिनं युद्धायाह्वाय" इति।

ते सर्वे ततो वालिनः पुरीं किष्किन्धां गत्वा वृक्षैरावृत्यातिष्ठन्। सुग्रीवोऽपि वालिन आह्वनकारणात् घोरमनदत्। भ्रातुराह्वानं श्रुत्वा वाली गृहान्निष्पपात। ततो वालिसुग्रीवयोस्तुमुलं युद्धमभूत्। रामस्तु तावत्यन्तसदृशौ दृष्ट्वा नावगच्छत्सुग्रीवतो वालिनम्। अतोऽन्तकरं शरं मोक्तुं बुद्धिं न कृतवान्। भग्नस्तदा वालिना सुग्रीवोऽपश्यंश्च रामं प्रदुद्रुवे पर्वतमृष्यमूकम्। "शापभयान्मुक्तोऽसि" इति वाली तमुक्त्वा स्वगृहं निवृत्तः। रामस्तु तदेव वनं जगाम यत्र सुग्रीवो गतः।

रामं दृष्ट्वा सुग्रीवोऽब्रवीत् किमिदानीं त्वया लब्धं

वैरिणा मां घातयित्वा, आदौ च तमाह्वयस्वेत्युक्त्वा, विक्रमं च दर्शयित्वा ? इति।

रामोऽपि तं सान्त्वयन्निव पुनरब्रवीत्– "त्वं च वाली च वाचा, वर्चसा स्वरेणातिसदृशौ। अतो नावगच्छं कः क इति। अत एव नोत्सृष्टो मया शरः। मित्रस्यैव विघातो भ्रमान्मा भूदिति। दत्ताभयस्य मित्रस्य विनाशस्तु महत्पातकम्। भवांस्तु वने शरणमस्माकं सर्वेषाम्। तस्मात्पुनर्युद्धयस्व, मा शंकीः। एकेनैवेषुणा वालिनमद्य मृतं पश्य। त्वमात्मनोऽभिज्ञानार्थं किंचिच्चिह्नं कुरु। लक्ष्मण! अस्य सुग्रीवस्य कण्ठे पुष्पमालां स्थापय।" इति।

लक्ष्मणेन धारितया मालया स सुग्रीवोऽतीव शुशुभे। पुनश्च गत्वा किष्किंधां वालिनं अतिघोरस्वरेणाह्वयत्। शब्दं श्रुत्वा वाली वेगेन रोषाद्गृहान्निष्पपात। सुग्रीवं च दृष्ट्वा–ऽब्रवीत् "एष मम बद्धो मुष्टिस्तव प्राणानादाय एव यास्यति।" इति।

तेन वालिना रोषादेव ताडितः सुग्रीवो रुधिरं वमन् किंचिन्मूर्च्छित इवाभवत्। सोऽपि सत्वरं संज्ञां प्राप्य सालवृक्षमुत्पाट्य वालिनं सकोपं ताडितवान्। शोणिताक्तौ तौ परस्परं तर्जयन्तौ अयुध्येताम्। रामस्ततो धनुः संधाय एकेनैव शरेण वालिनं गतसत्त्वं विचेतनं अकरोत्।

तं मूर्च्छितं गतसत्त्वं दृष्ट्वा महावीर्यौ भ्रातरौ रामलक्ष्मणौ बहुमान्यं वीरं सुग्रीवमुपयातौ । वाली तु रामं दृष्ट्वा परुषमब्रवीत् । " मम पराङ्मुखवधं कृत्वा त्वया किं यशः प्राप्तम् ? रामः कुलीनस्तेजस्वी दृढव्रतश्चेति सर्वे कथयन्ति । परंतु पापाचारमेवाहं त्वां पश्यामि । अहं तु तव विषये पुरे वा न करोमि किंचिदपि पापम् । नापि त्वामवजाने । कस्मात्त्वमकिल्बिषं मां हंसि ? त्वयाद्य तु धर्मं त्यक्त्वैवाऽहं रणे निहतः । किमर्थमेवमधर्माचरणं भवताचरितम् ? "

---

## પાઠ ૧૧

ધાતુને પ્રત્યય લાગ્યા પછી જે શબ્દ બને છે, તેની વિધિ હવે બતાવવામાં આવે છે. આગળના પાઠોમા કેટલાક પ્રત્યય બતાવી દીધા છે, અહીં સંક્ષેપમાં તેનો ઉલ્લેખ કરવામા આવે છે—

( ૧ ) तव्य ।

સંસ્કૃતમાં ' तव्य ' પ્રત્યય ઘણો ઉપયોગી છે અને એ લાગવાથી ઘણી સહેલી રીતે શબ્દ બને છે જુઓ ' गम् ' ધાતુથી ' गन्तव्यम् ' બને છે, ' कृ ' ધાતુથી ' कर्तव्यम् ' બને છે. આ પ્રમાણેજ બીજા ધાતુઓથી પણ શબ્દ તૈયાર થાય છે. એનો ઉપયોગ નીચે કરી બતાવ્યો છે—

मया गन्तव्यम् = મારે જવું જોઈએ.
मया कर्म कर्तव्यम् = મારે કર્મ કરવું જોઈએ.
मया पुस्तकं पठितव्यम् = મારે પુસ્તક ભણવું જોઈએ.
त्वया इदानीं न क्रीडितव्यम् = તારે હમણાં રમવું ન જોઈએ.

આ પ્રમાણે એ શબ્દોનો ઉપયોગ થાય છે. જો આ શબ્દ વિશેષણ તરીકે વપરાય તો એના લિંગ, વચન, વિભક્તિ વિશેષ્યના લિંગ, વચન, વિભક્તિ પ્રમાણે થાય છે જેમકે—

एषा बाला त्वया रक्षितव्या = આ બાળા તારા વડે રક્ષણ કરવા યોગ્ય છે.
एष प्रासादस्त्वया रक्षितव्य. = આ રાજમહેલ તારાવડે રક્ષણ કરવા યોગ્ય છે.
एतत् क्षेत्रं त्वया रक्षितव्यम् = આ ખેતર તારાવડે રક્ષણ કરવા યોગ્ય છે.

પાઠક આ ઉદાહરણોમાં જોઇ શકે છે કે એકજ ' रक्षितव्य ' શબ્દ વિશેષ્યને અનુસરીને કેવી રીતે બદલાયો છે. એવાં વાક્યોમાં ઘણું કરીને ' अस्ति ' ક્રિયાને અધ્યાહાર રાખીને જ અર્થ કરવો પડે છે. જેમકે—

एतत् पुस्तकं त्वया तत्र रक्षितव्यम् अस्ति ।
एतत्पुस्तकं त्वया तत्र रक्षितव्यम् ।

આ બન્ને વાક્યોનું તાત્પર્ય એકજ છે. જે વખતે ક્રિયાપદનું રૂપ બનાવવું કઠણ હોય છે તે વખતે એનાં રૂપોના વાક્ય બનાવવાં ઘણાં સહેલાં પડે છે. સંસ્કૃતમાં આ મોટી સરળતા છે.

शब्द ।

| | | |
|---|---|---|
| स्पर्ध्- | स्पर्धितव्यम् = | સ્પર્ધા કરવા યોગ્ય. |
| विद्- | वेदितव्यम् = | જાણવા યોગ્ય. |
| मुद्- | मोदितव्यम् = | આનંદ કરવા યોગ્ય. |
| खाद्- | खादितव्यम् = | ખાવા ,, |
| भर्ज्- | भर्जितव्यं = | શેકવા ,, |
| अर्च्- | अर्चितव्यं = | પૂજા કરવા ,, |
| वाञ्छ्- | वाञ्छितव्यं = | ઇચ્છા કરવા ,, |
| वेष्ट्- | वेष्टितव्यं = | વેષ્ટન ,, ,, |
| चेष्ट्- | चेष्टितव्यं = | ચેષ્ટા ,, ,, |
| जल्प्- | जल्पितव्यं = | બોલવા ,, |
| भाष्- | भाषितव्यं = | બોલવા ,, |
| ज्ञा- | ज्ञातव्यं = | જાણવા ,, |
| दा- | दातव्यं = | આપવા ,, |
| हन्- | हन्तव्यं = | હણવા ,, |
| वस्- | वस्तव्यं = | રહેવા ,, |
| वच्- | वक्तव्यं = | બોલવા ,, |

આ પ્રમાણે કેટલાયે શબ્દ બની શકે છે. પાઠક પૂર્વોક્ત ધાતુઓમાંથી શબ્દ બનાવે અને જ્યાં આ પ્રત્યયના રૂપ આવે તે ત્યાં ઓળખવાનો પ્રયત્ન કરે.

संस्कृत-वाक्यानि ।

तेन वीरेण किमर्थं तेन सह न स्पर्धितव्यम् ? बालकैः एतदन्नं इदानीमेव खादितव्यम् । मम भृत्येन सर्वेऽपि

चणकाः अद्यैव भार्जितव्याः । ईश्वरस्त्वया नित्यशोऽचिंतव्यः । बालकैर्बालिकाभिश्च शोभनानि पुस्तकानि नित्यशः पठितव्यानि । सर्वैर्मनुष्यैः सायं समये क्रीडांगणं गत्वाऽवश्यं क्रीडितव्यम् । वीरैः पुरुषैः स्त्रीणां रक्षा कर्तव्या । इदानीं एष ग्रामो वीरैः रक्षितव्यः । त्वया पूर्वं सर्वं ज्ञातव्यं पश्चात् स्वकर्तव्यं कर्तव्यम् ।

આ પ્રમાણે પાઠક અનેક વાક્ય બનાવી શકે છે. આ ' तव्य ' પ્રત્યયવાળા શબ્દોને માટે तृतीया विभक्ति ના કર્તાની આવશ્યકતા રહે છે જેમકે—

मया वक्तव्यं । रामेण शत्रुर्हन्तव्यः । व्याघ्रेण पुरुषः न हन्तव्यः । अग्निना सर्वं वनं दग्धव्यम् ।

આ પ્રમાણે અનેક વાક્ય બનાવવા સહેલા છે.

( २ ) अनीय

બીજો ' अनीय ' પ્રત્યય આજ અર્થમાં થાય છે એને બનાવવાની રીતિ પણ અતિ સુગમ છે. ' कृ ' ધાતુથી ' करणीय ' ' गम् ' ધાતુથી ' गमनीय ' રૂપ થાય છે જુઓ એના રૂપ—

| | | |
|---|---|---|
| कृ- | करणीयं | = કરવા યોગ્ય |
| स्मृ- | स्मरणीय | = સ્મરણ કરવા યોગ્ય |
| भृ- | भरणीयं | = ભરણ પોષણ કરવા ,, |
| प्रथ्- | प्रथनीय | = પ્રસિદ્ધ કરવા ,, |
| त्वर्- | त्वरणीयं | = ઉતાવળ કરવા ,, |

| | | | |
|---|---|---|---|
| वृध्- वर्धनीयं | = વધારવા | યોગ્ય |
| रुच्- रोचनीय | = પ્રકાશવા | ,, |
| शुभ्- शोभनीयं | = શોભાવવા | ,, |
| बुध्- बोधनीयं | = જાણવા | ,, |
| ज्वल्- ज्वलनीयं | = બાળવા | ,, |
| स्पृह्- स्पृहणीयं | = ઇચ્છા કરવા | ,, |

આ પ્રમાણે સહેલાઇથી બીજા ધાતુઓના રૂપ પણ બનાવી શકાય છે અને એ રૂપવાળા વાકય પણ પૂર્વની માફક બને છે—

## संस्कृत–वाक्यानि ।

त्वया सर्वं कर्म इदानीमेव करणीयम् । यन्मया वर्धनीयं अस्ति, तदहं वर्धयामि । यत्त्वया संवर्धनीयं भवेत्तत्त्वं संवर्धय । त्वया पुष्पमालाभिः शोभनीय एष मण्डपः । अग्निना त्वया ज्वलनीयमेतत्पत्रम् । त्वया भरणीय एष बालः । तेन करणीय एष यत्नः ।

આ પ્રમાણે વાકય બનાવી શકાય છે

—:o—

## पाठ १२

### रामायणम् ।

रामस्तु वालिनमब्रवीत् " धर्मं अर्थं कामं चापि लौकिकव्यवहारमविज्ञाय बाल्यादिव कथं विगर्हसे ? इक्ष्वाकूणां राज्ञां पालितेयं भूमिः भरतभूमिरिति कथ्यते । वयं चात्र धर्मस्य रक्षितारः । तथा चान्येऽपि बहवः पार्थिवाः सन्त्येव । वयं धर्मरक्षणार्थमेवात्र संचरामः । धर्मस्य रक्षणं, सज्जनानां पालनं, दुष्टानां निर्दलनं चास्माकं कर्म । त्वं तु धर्ममार्गे न स्थितः । सनातनं धर्मं त्यक्त्वा भ्रातुर्भार्यायां पापमाचरसि । यस्तु भगिनीमौरसीं भार्यां वाऽनुजस्य कामात्प्रचरेत् स नरो वध्य इति सद्भिः कथितो धर्मः । अतएव त्वं मया हतः । पापस्य नरस्याशासनाद्राजा किल्बिषमाप्नोति, तस्य शासनादेव राजा श्रेयः प्राप्नोति । अतस्त्वं वधाय एव योग्यः पापाचारो मया हतः । "

एतद्रामवचनं श्रुत्वा धर्मेऽधिगतनिश्चयो वाली रामचंद्रे दोषं न दध्यौ । उवाच तं -- " यत्त्वं आत्थ तत्तथैव, न संशयः । न चात्मानं शोचे, न च भार्यां, नापि बान्धवान् यथा [illegible] पुत्रं गुणज्येष्ठमङ्गदं शोचे । विधत्स्व सुग्रीवेऽङ्गदे च उत्तमां मतिम् । त्वमेवासि गोप्ता शास्ता च इति । "

एवमुक्त्वा मुमोह, जीवितान्तं जगाम च।

वालिनो भार्या तु तारा तच्छ्रुत्वोद्विग्ना भूत्वा तत्रागमत्। पतिं पञ्चत्वं गतं दृष्ट्वा विललाप च। तारां दीनां तथा क्रोशन्तीं दृष्ट्वाऽङ्गदं च विलपन्तमवलोक्य सुग्रीवोऽपि विषादमगमत्। पतिमुखं समुपाजिघ्रन्ती तारा बहु विललाप आह च—

'किं मही मत्तोऽपि प्रियतरा तव? यतस्त्वां भूमिं परिष्वज्य शेषे? नापि मां प्रतिभाषसे? विपश्चिता शूराय खलु कन्या न प्रदातव्या।' इति।

समानशोकः काकुत्स्थो रामस्तां सान्त्वयन्नाह- 'मृतः पुरुषः शोकपरितापेन युज्यते श्रेयसा न। अतः अनन्तरं कार्यं कर्तुं त्वमर्हसि। अलं शोकेन। नियतिः श्रेष्ठा, तत्प्राप्तकालं कर्म उपास्यताम्।' इति।

ततः सह सुग्रीवेणाङ्गदो रुदन् विधिवत् पितरं अग्निं ददौ, चकार च दीर्घमध्वानं प्रस्थितं पितरमपसव्यं प्रदक्षिणं सह रामेण। ततो हनुमानब्रवीत्– 'भवत्प्रसादात्, काकुत्स्थ! पितृपैतामहं राज्यं दुष्प्राप्यमपि सुग्रीवेण प्राप्तम्। अत इदानीं त्वया समनुज्ञातः सुग्रीवो भवता सह नगरं प्रवेक्ष्यति इति।' तच्छ्रुत्वा राम उवाच- हे हनूमन्! अहं तु पितुर्निर्दे-

अमनुसरन् चतुर्दशवर्षपर्यन्तं ग्रामे वा नगरं वा न प्रवेक्ष्यामि । सुग्रीवश्च राज्ये अभिषिच्यतां, अङ्गदश्च यौवराज्येऽभिषिक्तो भवतु विधिवत् इति । '

रामेणैवं समनुज्ञातः सुग्रीवो रम्यां किष्किंधां पुरीं प्रविवेश । साधु इति ब्रुवत्सु वानरेषु यौवराज्येऽङ्गदं चाभ्यषेचयत् ।

माल्यवतः पर्वतस्य पृष्ठे वसन् राम एकदा लक्ष्मणमब्रवीत् 'पश्यायं जलसमागमे वर्षाकालः संप्राप्तः मेघपटलैरम्बरमाच्छादितम् । नीलमेघाश्रिता विद्युत् स्फुरति । '

' पर्जन्यजलधाराभिरभिषिच्यमानाः पर्वताः नवयौवनेनैवाधिकतरं विभान्ति । अस्मिन्भाद्रपदे मासे मंत्ररतानां ब्राह्मणानां अध्ययनकालोऽयमुपस्थितः इति । '

तत ऊर्ध्वं शारदीं रजनीं ज्योत्स्नामयीं दृष्ट्वा सुग्रीवं च कामवृत्तं दृष्ट्वा रामः परमातुरो भूत्वा मुमोह । सीतां अनुचिन्तयंश्च कृशेन वदनेन लक्ष्मणमुवाच- ' अधुना मेघाः शान्तवेगाः । वार्षिकाश्चत्वारो मासाः वर्षशतोपमाः सीतामपश्यतो मम गताः । हे लक्ष्मण ! सुग्रीवः कृपां न कुरुते । स त्वं किष्किन्धां प्रविश्य ग्राम्यसुखे सक्तं मूर्खं सुग्रीवं ब्रूहि । वीरः सत्यपरः एव भवति । हे सुग्रीव ! त्वं समये तिष्ठ ! मा वालिनः मार्गेण गच्छ । इति । '

एवं समादिष्टो लक्ष्मणो रम्यां किष्किन्धां नगरीं प्रविवेश। नानापुष्पफलशोभितां च तां नगरीं ददर्श। अवार्यमाणश्च लक्ष्मणः प्रविवेश रम्यं सुग्रीवस्य गृहम्। तस्यान्तःपुरे बहुभिः स्त्रीभिः सततं प्रवर्तमानं संगीतं निशम्योद्विग्न इवाभवत्। स्थित्वा च तत्र कंचित्कालं ज्याशब्दं कृतवान्। तं ज्याशब्दं श्रुत्वा आगतं लक्ष्मणं ज्ञात्वा, तं क्रोधयुक्तं च दृष्ट्वा स तारामुवाच— 'किं नु क्रोधकारणम्! यत्प्रकृत्या मृदुरपि लक्ष्मण इदानीं सरोष इव दृश्यते! अतस्त्वमेव अग्रे गत्वा तं प्रसादयेति।'

तथेत्युक्त्वा तारा सलज्जा इव लक्ष्मणसंनिधानं जगाम। स्त्रीसंनिकर्षादवाङ्मुखो निवृत्तक्रोधश्चाभूल्लक्ष्मणः। साऽपि तं प्रार्थयामास किमर्थं कोपः? को न तिष्ठति भवन्निदेशे? वानरवंशनाथस्य प्रमादमपि सोढुमर्हसि। महाबाहो लक्ष्मण! आगच्छ अन्तः, क्षमस्व सुग्रीवमिति। ततोऽरिन्दमो लक्ष्मणोऽभ्यन्तरं प्रविवेश।

सुग्रीवोऽपि तत्र लक्ष्मणं दृष्ट्वा व्यथितेन्द्रियो बभूव। रुमाद्वितीयं नारीमध्यगतं सुग्रीवं लक्ष्मणोऽब्रवीत्— 'राजा कृतज्ञः सत्यवादी च लोके महीयते। कृतार्थेन त्वया सीताया मार्गणे यत्नो विधेयः। तस्मिन् विषये त्वं किमपि कर्म न करोषि। तत्किं वालिनो मार्गेणैव गन्तुमिच्छसि? न स

संकुचितो मार्गः येन वाली हतो मृतश्च । 'अतः सुग्रीव ! समये तिष्ठ, मा वालिपथमन्वगाः ' इति ।

तच्छ्रुत्वा सुग्रीवो विमद आसीत् । उवाच च लक्ष्मणम् " सर्वमेव मयेदं ऐश्वर्यं रामप्रसादादेव प्राप्तम् । स एव स्वेनैव तेजसा रावणं वधिष्यति सीतां च प्राप्स्यति । तस्यानुयात्रां अयमहं करिष्यामि, इति ।"

लक्ष्मणोऽपि प्रीत्योवाच– " त्वया सनाथेन सनाथो मे भ्राता । क्षमस्व मे परुषोक्तिं, इति । "

सुग्रीवोऽपि पार्श्वस्थं हनूमन्तमब्रवीत् । क्षिप्रं तांस्तान् वानरानानय, आनुयात्रिकं कल्पय च । श्रुत्वा तद्वचनं वायुपुत्रो हनूमान् वानरान् सर्वासु दिक्षु प्रेषयामास । वानरराजस्याज्ञां श्रुत्वा सर्वे वानरा आययुः । तेषां सर्वेषां वानराणां महती सेना बभूव । तया सेनया सह सुग्रीवो राघवं आगत्य तस्य पादयोः पपात । तं पादयोः पतितं बहुमानादुत्थाप्य राघवः सुग्रीवं परिषस्वजे ।

**शब्दार्थ**

| | |
|---|---|
| लौकिकव्यवहारः = લોકમાં કરવાનો વ્યવહાર | परमातुरः = અત્યંત દુઃખી |
| बाल्यं = મૂઢતા | ग्राम्यसुख = તુચ્છ સુખ |
| विगर्ह = નિંદા કરવી | अनिवार्यमाण = જેને પ્રતિબંધ નથી થયો તે |

| | | | |
|---|---|---|---|
| संचर् | = ભ્રમણ કરવું | अवाङ्मुख | = નીચે મુખ રાખી |
| निर्दलनं | = નાશ | सोढुं | = સહન કરવા યોગ્ય |
| औरसी | = ઔરસ (પોતાની) | मार्गणं | = શોધ (શોધવું) |
| किल्बिषं | = પાપ | विमदः | = જેને ગર્વ નથી તે |
| पञ्चत्वं गतः | = મરી ગયો | पार्श्वस्थः | = પડખે ઉભેલો |
| विपश्चित् | = જ્ઞાની | निर्देश | = આજ્ઞા |
| नियतिः | = દૈવ | | |

समासाः ।

१ लौकिकव्यवहारः = लौकिकश्चासौ व्यवहारश्च ।

२ धर्मरक्षणार्थं = धर्मस्य रक्षणं धर्मरक्षणं तदर्थम् ।

३ पापाचारः = पापं आचरतीति ।

४ गुणज्येष्ठं = गुणैः ज्येष्ठं ।

५ समानशोकः = समानः शोकः यस्य ।

६ भवत्प्रसादः = भवतां प्रसादः ।

७ दुष्प्राप्यं = दुःखेन प्राप्यं ।

८ जलसमागमः = जलस्य समागमः ।

९ मेघपटलं = मेघानां पटलम् ।

१० नीलमेघाश्रिता = नीलश्चासौ मेघश्च नीलमेघः ।
नीलमेघे आश्रिता ।

—:o—o—

# પાઠ ૧૩

## ( महाभारत भीष्मपर्व अ० ५१ )

सञ्जय उवाच ।

क्रौञ्चं दृष्ट्वा ततो व्यूहमभेद्यं तनयस्तव ।
रक्ष्यमाणं महाघोरं पार्थेनामिततेजसा ॥ १ ॥
आचार्यमुपसंगम्य कृपं शल्यं च पार्थिव ।
सौमदत्तिं विकर्णं च सोऽश्वत्थामानमेव च ॥ २ ॥
दुःशासनादीन्भ्रातॄंश्च सर्वानेव च भारत ।
अन्यांश्च सुबहूञ्छूरान्युद्धाय समुपागतान् ॥ ३ ॥
प्राहेदं वचनं काले हर्षयंस्तनयस्तव ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ४ ॥
एकैकशः समर्था हि यूयं सर्वे महारथाः ।
पाण्डुपुत्रान् रणे हन्तुं ससैन्यान्किमु संहताः ॥ ५ ॥

ततोऽभेद्यं क्रौञ्चं नाम महाघोरं व्यूहं, सैन्यव्यूहं, अमिततेजसा पार्थेन पृथापुत्रेण रक्ष्यमाणं दृष्ट्वा, तव तनयः दुर्योधनः ॥१॥ हे पार्थिव ! सः आचार्यं उपसंगम्य समीपं गत्वा, कृपं शल्यं च, सौमदत्तिं विकर्णं च अश्वत्थामानं एव च ॥२॥ हे भारत ! दुःशासनादीन् भ्रातॄन् च सर्वान् एव अन्यान् सुबहून् युद्धाय समुपागतान् शूरान् च ॥३॥ तव तनयः सर्वान् हर्षयन् काले इदं वचनं प्राह। ' यूयं सर्वेऽपि महारथाः

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तमिदमेतेषां बलं भीमाभिरक्षितम् ॥ ६ ॥
संस्थानाः शूरसेनाश्च वेत्रिकाः कुकरास्तथा ।
आरोचकास्त्रिगर्ताश्च मद्रका यवनास्तथा ॥ ७ ॥
शत्रुञ्जयेन सहितास्तथा दुःशासनेन च ।
विकर्णेन च वीरेण तथा नन्दोपनन्दकैः ॥ ८ ॥
चित्रसेनेन सहिताः सहिताः पारिभद्रकैः ।
भीष्ममेवाभिरक्षन्तु सहसैन्यपुरस्कृताः ॥ ९ ॥
ततो भीष्मश्च द्रोणश्च तव पुत्राश्च मारिष ।
अव्यूहन्त महाव्यूहं पाण्डूनां प्रतिबाधकम् ॥ १० ॥

---

नानाशस्त्रप्रहरणाः नानाशस्त्रप्रहारिणः सर्वेऽपि युद्धविशारदाः ससैन्यान् पांडुपुत्रान् हन्तुमेकैकशः समर्था हि, किमु संहताः एकीभूताः ॥ ४-५ ॥ भीष्माभिरक्षितं अस्माकं बलं अपर्याप्तं तैः व्याप्तुं अशक्यम् । भीमाभिरक्षितं एतेषां इदं बलं सैन्यं तु पर्याप्तं परितः सर्वतः व्याप्तुं शक्यम् ॥ ६ ॥ संस्थानाः, शूरसेनाश्च वेत्रिकाः कुकराः तथा शत्रुञ्जयेन तथा दुःशासनेन सहिता सर्वे वीराः, वीरेण विकर्णेन तथा नन्दोपनन्दकैश्च सहिताः, चित्रसेनेन सहिताः, पारिभद्रकैः वीरैः सहिताश्च सहसैन्यपुरस्कृताः सर्वे वीराः भीष्ममेव अभिरक्षन्तु ॥ ७-९ ॥ हे मारिष धृतराष्ट्र ! ततः भीष्मश्च द्रोणश्च तव पुत्रश्च दुर्योधनः

भीष्मः सैन्येन महता समन्तात्परिवारितः ।
ययौ प्रकर्षन्महतीं वाहिनीं सुरराडिव ॥ ११ ॥
तमन्वयान्महेष्वासो भारद्वाजः प्रतापवान् ।
कुन्तलैश्च दशार्णैश्च मागधैश्च विशांपते ॥ १२ ॥
विदर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि ।
सहिताः सर्वसैन्येन भीष्ममाहवशोभिनम् ॥ १३ ॥
गान्धाराः सिन्धुसौवीराः शिबयोऽथ वसातयः ।
शकुनिश्च स्वसैन्येन भारद्वाजमपालयत् ॥ १४ ॥
ततो दुर्योधनो राजा सहितः सर्वसोदरैः ।
अश्वातकैर्विकर्णैश्च तथा चाम्बष्ठकोसलैः ॥ १५ ॥

---

पांडवानां प्रतिबाधकं महाव्यूहमव्यूहन्त ॥१०॥ महता सैन्येन समन्तात्परिवारितो भीष्मः सुरराड् इन्द्र इव महतीं वाहिनीं प्रकर्षन् ययौ ॥ ११ ॥ तं प्रतापवान् महेष्वासः भारद्वाजः अन्वयात् । हे विशांपते प्रजानां पालक । कुन्तलैः दशार्णैः मागधैः च विदर्भैः मेकलैः च कर्णप्रावरणकैः अपि वीरैः सहिताः गान्धाराः सिन्धुसौवीराः अथ शिबयः वसातयः सर्वसैन्येन सहिताः आहवशोभिनं युद्धशोभिनं वीरं भीष्मं अपालयन् । तथा स्वसैन्येन सहितः शकुनिः भारद्वाजं द्रोणं अपालयत् ॥ १२-१४ ॥ ततः राजा दुर्योधनः सर्वसोदरैः सहितः अश्वातकैः विकर्णैश्च तथा अम्बष्ठकोसलैः दरदैः च

दरदैश्च शकैश्चैव तथा क्षुद्रकमालवैः ।
अभ्यरक्षत संहृष्टः सौबलेयस्य वाहिनीम् ॥ १६ ॥
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष ।
विन्दानुविन्दावावन्त्यौ वामपार्श्वमपालयन् ॥ १७ ॥
सौमदत्तिः सुशर्मा च काम्बोजश्च सुदाक्षिणः ।
श्रुतायुश्चाच्युतायुश्च दाक्षिणं पार्श्वमास्थिताः ॥ १८ ॥
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
महत्या सेनया सार्धं सेनापृष्ठे व्यवास्थिताः ॥ १९ ॥
पृष्ठगोपास्तु तस्यासन् नानादेश्या जनेश्वराः ।
केतुमान्वसुदानश्च पुत्रः काश्यस्याभिभूः ॥ २० ॥

---

शकैः च एव तथा क्षुद्रकमालवैः सहितः अतएव संहृष्टः आनंदितः सौबलेयस्य शकुनेः वाहिनीं सेनां अभ्यरक्षत ॥१५-१६॥ हे मारिष धृतराष्ट्र भूरिश्रवाः शलः शल्यः भगदत्तः ॥ आवन्त्यौ अवन्तिदेशीयौ विन्दानुविन्दौ वामं पार्श्वमपालयन् ॥१७॥ सौमदत्तिः सुशर्मा च काम्बोजश्च सुदाक्षिणः श्रुतायुः च अच्युतायुः च दक्षिणं पार्श्वं आस्थिताः स्थिताः ॥ १८ ॥ अश्वत्थामा, कृपः च एव कृतवर्मा च सात्वतः, महत्या सेनया सार्धं सेनापृष्ठे व्यवस्थितः ॥ १९ ॥ नानादेश्याः जनेश्वराः तस्य पृष्ठगोपाः पृष्ठरक्षका आसन् । केतुमान वसुदानः च काश्य

ततस्ते तावकाः सर्वे हृष्टा युद्धाय भारत ।
दध्मुः शंखान्मुदायुक्ताः सिंहनादांस्तथानदन् ॥ २१ ॥
तेषां श्रुत्वा तु हृष्टानां वृद्धः कुरुपितामहः ।
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥ २२ ॥
ततः शंखाश्च भेर्यश्च पेश्यश्च विविधाः पुरैः ।
आनकाश्चाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ २३ ॥

---

अभिभूः पुत्रः तस्य पृष्ठरक्षका आसन् ॥२०॥ हे भारत ! ततः ते सर्वे तावकाः युद्धाय हृष्टा भूत्वा मुदा युक्ताः शंखान् दध्मुः तथा सिंहनादान् उन्नदन् ॥ २१ ॥ तेषां हृष्टानां तु शब्दं श्रुत्वा वृद्धः कुरुपितामहः भीष्मः उच्चैः सिंहनादं विनद्य, प्रतापवान् शंखं दध्मौ ॥२२॥ ततः शंखाश्च भेर्यश्च विविधाः पेश्यश्च आनकाश्च परैः अभ्यहन्यन्त, स तुमुलः शब्दोऽ--भवत् ॥ २३ ॥

## शब्दार्थ ।

| | |
|---|---|
| अभेद्यं = न भेदी शकाय एवुं | रक्ष्यमाणः = रक्षण करतो |
| उपसंगम्य = पासे जईने | युद्धविशारदः = युद्ध प्रवीण |
| पर्याप्त = बधे फेलायेलुं | वाहिनी = सेना |
| सोदर = एक पेटथी जन्मेलो | अपर्याप्त = बधे नहीं फेलायलुं |
| आवन्त्यो = अवन्ती देशना लोक | सेनापृष्ठं = सैन्य पीठ |
| भेरी = नगारुं | आनक = ढोल |
| तुमुल = मोटुं | विनद्य = शब्द करीने |

समासाः ।

१ युद्धविशारदः = युद्धे विशारदः ।
२ पाण्डुपुत्रः = पाण्डोः पुत्रः ।
३ सुरराट् = सुराणां राट्, राड् राजा ।
४ सेनापृष्ठं = सेनायाः पृष्ठं ।
५ जनेश्वरः = जनानां ईश्वरः ।
६ कुरुपितामहः = कुरूणां पितामहः ।

અગિયારમાં પાઠમાં બે પ્રત્યય બતાવ્યાં છે; હવે આ પાઠમાં બીજા કેટલાક પ્રત્યય બતાવાય છે. પાઠક જુએ કે કેટલી સુગમતાથી કેવી રીતે શબ્દ બને છે અને એનો કેટલો ઉપયોગ થાય છે.

( ३ ) य ।

આ પ્રત્યય પણ પૂર્વવત્ લાગે છે અને પહેલાંની માફક જ એના રૂપ થાય છે જેમકે– ' ज्ञा ' ધાતુથી ' ज्ञेय ' ' पा ' ધાતુથી पेय ' વિગેરે રૂપ થાય છે—

शब्द

| | | | |
|---|---|---|---|
| ज्ञेय | = જાણવા યોગ્ય | देय | = આપવા યોગ્ય |
| पेय | = પીવા ,, | वध्य | = વધ કરવા ,, |
| ध्येय | = ધ્યાન કરવા ,, | जेय | = જય કરવા ,, |
| शस्य | = પ્રશંસા કરવા ,, | शप्य | = શાપ આપવા ,, |
| क्रेय | = ખરીદવા ,, | लभ्य | = પ્રાપ્ત થવા ,, |
| जन्य | = ઉત્પન્ન થવા ,, | सह्य | = સહન કરવા ,, |

संस्कृत-वाक्यानि

ब्रह्म एव सर्वैर्ज्ञेयं वस्तु, परंतु तदेव न केनापि ज्ञायते । शत्रुः शूरैर्वध्यो भवति । इदं दुःखं त्वया सह्यं इदानीम् । तत् कथं सह्यं भवेत् । मित्राणां मधुरैः सान्त्वपूर्वैर्वचनैर्महदपि दुःखं सह्यं भवति । स ग्रंथस्त्वया मह्यं देयः । इदानीमेव देयः । किं एतज्जलं पेयं अस्ति ? यदि तृषितोऽसि तर्हि त्वयैतज्जलं पेयं नान्यथा, यत एतत् परिशुद्धं नास्ति । त्वया तस्य कर्म शस्यम् । वध्यः पुरुषो वधकैर्वधस्थानं प्रति नीयते ।

એક 'य' પ્રત્યય બીજી જાતિનો છે કે જે જ્યારે લાગે ત્યારે પૂર્વધાતુના સ્વરનો ગુણ થાય છે. એના રૂપ જુઓ—

| ધાતુ | પ્રત્યય | રૂપ | અર્થ | |
|---|---|---|---|---|
| कृ | य | कार्यं | કરવા | યોગ્ય |
| वृष् | ,, | वर्ष्यं | વૃષ્ટિકરવા | ,, |
| यज् | ,, | याज्य | યજ્ઞ ,, | ,, |
| त्यज् | ,, | त्याज्यं | ત્યાગ ,, | ,, |
| युज् | ,, | योज्यं | સંયોગ ,, | ,, |
| प्रयुज् | ,, | प्रयोज्यं | પ્રયોગ ,, | ,, |
| वच् | ,, | वाच्यं | બોલવા | ,, |
| पच् | ,, | पाच्यं | રાંધવા | ,, |

એનો ઉપયોગ વાકયોમાં ઘણો થાય છે.

संस्कृत-वाक्यानि ।

कदापि कर्म न त्याज्यं कार्यमेव तत् । कर्म नैव त्योज्यं

यतः तद्दोषवत् इति मनीषिणो वदन्ति । यत्कार्यं तदवश्यमेव कार्यम् । त्वया इदानीं नैवं वाच्यम् । त्वया स एवं वाच्यः । कार्यं कर्म सदैव समाचार । अकार्यं कदापि न समाचर । यद्युक्त्या योज्यं तत्त्वं संयोजय । यत्प्रयोज्यं यत्प्रयोक्तव्यं त्वया । रामस्त्वया वाच्यः । त्वं अधुना तत्र न गमिष्यसीति ।

આ પ્રમાણે અનેક શબ્દ બનાવી પાઠક એનો ઉપયોગ કરી અનેક વાકય બનાવી શકે છે.

ત્રીજા પ્રકારનો એક 'य' પ્રત્યય છે કે જે લાગે ત્યારે આ પ્રમાણે ગુણુ થતો નથી. જેના રૂપ નીચે પ્રમાણે બને છે—

| | | |
|---|---|---|
| स्तुत्य | = સ્તુતિ કરવા યોગ્ય | |
| गुह्य | = ગુપ્ત રાખવા | ,, |
| भिद्यं | = ભેદવા | ,, |
| कृत्यं | = કરવા | ,, |
| कल्प्य | = કલ્પના કરવા | ,, |
| जुष्य | = સેવન કરવા | ,, |
| आवृत्यं | = આવરણુ કરવા | ,, |
| शस्यं | = પ્રશંસા કરવા | ,, |
| शिष्य | = શિખવવા | ,, |

પૂર્વોક્ત પ્રકારે આ રીતના શબ્દોનો પણુ વાકયોમાં પ્રયોગ કરી અનેક વાકયો બનાવી શકાય છે.

संस्कृत-वाक्यानि ।

इदं गुह्यं वचनं त्वया कस्मै अपि न कथनीयम् । यत्कृत्यं

त्वया कर्तव्यं तत्त्वं अधुनैव कुरुष्व । स्तुत्यः खल्वेष तव प्रयत्नः यं त्वं करोषि ।

આ પ્રમાણે શબ્દ બનાવી પાઠક એનો ઉપયોગ વાક્યમાં કરી જુએ—

## ( ४ ) अक

'अक' પ્રત્યય ઘણોજ ઉપયોગી છે. કેટલાક શબ્દો આ એકજ પ્રત્યયથી બને છે. એ પ્રત્યય લાગતી વખતે ધાતુના સ્વરનો ગુણ અથવા વૃદ્ધિ પણ થાય છે. જેમકે 'वच्' = वाचक, पच् = पाचकः વિગેરે.

### શબ્દાર્થ ।

| | |
|---|---|
| कारकः = કરવાવાળો | दायकः = આપવાવાળો |
| बोधकः = જણાવાવાળો | पाचकः = રાંધવાવાળો |
| घातकः = મારવાવાળો | बाधकः = પીડવાવાળો |
| गायकः = ગાવાવાળો | याजकः = યજ્ઞ કરવાવાળો |
| चालकः = ચલાવવાવાળો | वाचकः = વાંચવાવાળો |
| आच्छादकः = ઢાંકવાવાળો | तोषकः = સંતોષ આપવાવાળો |
| त्रासकः = ત્રાસ દેવાવાળો | मोदकः = આનંદ આપવાવાળો |
| नर्तकः = નાચવાવાળો | वर्धकः = વધાવવાવાળો |
| पालकः = પાળવાવાળો | कर्तकः = કાપવાવાળો |
| संहारकः = સંહાર કરવાવાળો | शोधकः = શોધવા વાળો |
| नाशकः = નાશ કરવાવાળો | ग्राहकः = લેવાવાળો |

આ શબ્દોમાં ધાતુના ઉપાન્ત્ય સ્વરનો દીર્ઘ, ગુણ અથવા વૃદ્ધિ

થઇ છે. પરંતુ કેટલાક ધાતુઓના સ્વરનો ગુણ વિગેરે નથી થતું અને કેટલાક ધાતુઓનો ઉપાન્ત્ય સ્વર હોવા છતાં તે સ્વર જેવો ને તેવોજ રહે છે. એના ઉદાહરણ હવે જુઓ—

| | |
|---|---|
| जनकः = પિતા, | हिंसकः = હિંસા કરનાર |
| वधकः = વધ કરનાર | आरंभकः = આરંભ કરવાવાળો |
| दमकः = દમન કરનાર | व्रीडकः = શરમાઈ જનાર |
| निन्दकः = નિંદા કરનાર | खनकः = ખોદવાવાળો |
| अर्चकः = પૂજા કરનાર | जल्पकः = બંડબડ કરનાર |

પાઠક આ પ્રમાણે હવે શબ્દ બનાવી શકે છે. જે શબ્દો એના પાઠમાં આવી ગયા છે એ તેને પ્રથમ જોશે તો શબ્દ બનાવવાની સમજ પડી જશે. અને અનેક વાકય બનાવવાં સહેલાં થઇ પડશે.

## संस्कृत–वाक्यानि ।

तस्य परमात्मनो वाचकः प्रणवोऽस्ति । अस्य पदार्थस्य वाचकः कः शब्दोऽस्ति ? त्वं तस्य गमने किमर्थं बाधको भवसि ? यदा याजकोऽत्रागमिष्यति तदा यज्ञं समापयिष्यति । तस्य राज्ञो घातकास्ते मनुष्या वधस्थानं नीयन्ते राजपुरुषैः । अस्याः पाठशालायाः संचालकोऽध्यापक इदानीं कुत्र गतो-ऽस्ति ? अस्मिन् विशाले मंदिरे किमर्थं न कोऽपि गायको दृश्यते ? प्रजानां पालको राजा भवति तथैव गवां पालको गोप इति कथ्यते । सर्वेषां प्राणिनां नाशको मृत्युरेव नियत-समये आगच्छति प्राणिनामन्तं करोत्येव । तत्र द्वौ पाचकौ

स्तः परन्तु न कोऽपि स्वादकं भक्तुं शक्नोति। मिष्टान्नं बालकाय मोदकं भवति।

अस्य बालकस्य जनकः कुत्र गत इदानीम् ? साधूनां निन्दकः सदैव दुर्जन एव भवति। देवतानामर्चकः साधुरेव मन्तव्यः। मनुष्याणां वा प्राणिनां वा हिंसको दुर्जनः खलु स्थानादस्माद् दूरं गच्छतु। खनको लोहमयेन दण्डेनैव भूमिं खनति।

સૂચના

વાચક આ પ્રમાણે વાકય બનાવી જુએ. ધાતુમાંથી શબ્દ બનાવવા અને તેમનો વાકયોમાં ઉપયોગ કરવાનું વાચકોને આ પ્રમાણે સમજાઈ શકે છે

--०-----०--

## પાઠ ૧૪

### रामायणम्।

रामं नमस्कृत्य सुग्रीव उवाच-- " एतत्सर्वं मम सैन्यं त्वद्वशे वर्तते। तदिदानीमाज्ञापयितुमर्हसि किं कार्यं मया कर्तव्यमिति। उच्यतां यत्प्राप्तकालं मन्यसे। इति।

राम उवाच-" ज्ञायतां प्रथमं सीता यदि जीवति वा न। सोऽपि देशो यस्मिन् रावणो वसति। नाहमस्मिन् कार्ये प्रभुः।

